आ-वसथ[ii]– -थः ऐ ३,१२[३]; -थाः ऐ ३,१२; -थान् छां ४,१,१; -थे १संन्या २,९३; -थैः बृ ४,३,३७.
आ √वह्,>वाहि, आवहन्ति तै १, ५, ३; आवह तै १, ४, २; मना १,५§[a];२,१२,२§[b]; व ४५९ : ६; ४६६ : १२; §[c]आवहत् कुं ९![d]; कठ १![d]; कश्रु ३,२; २संन्या २० : ५; आवहेत् शि ३,११.
आवाहयामि मना २,३५[e]§[c]; सुमु १; आवाहयेत् रापू ५,६; सौ १,२.
आ-वहत्– -हन्तः पिंब्र १,४.
आवहन्ती– -न्ती तै १, ४,१; व ४६६ : ११§[f].
आ-वाहन– -नम् पहं ४; नाप ३, ८६; मं २,२,५; मा २९; आपू १; कालि ४०१ : १२.
आवाहन-सुख– -खान् बृजा ३, २५.
आवाहना(न-आ)दि– -दिसौ १,२
आ-वाह्य त्रिता २,६९; सूता ५, ४; सुमु ८; वउ ६,१९.
आ √वा, आवाति मना २, ७९§[g].
!आवाः[h] तै ३,१०,६; नृपू २,१८§[i].
!आवारन्द्(म्-द)[j]– -न्दः पा ५,४.
आ-वार्य आ √वृ (वरणे) द्र.
आविक– २अवि– द्र.
आ √विद्(ज्ञाने)>वेदि
आ-वेदित,ता– -तः महा २, २१; -ताम् त्रिता २,२३.
आविद्यक– अ-विद्या– द्र.
आ √विश्,>वेशि, आविशति बृ १, ५, १७-२०; आविशन्ति मुं ३, २,५; बृ १, ५,१७; त्रि ७; भव १, ९; आविश-आविश गरु ६; आविशत् बृ २, ५, १८; आविशेत् नाप ३,५५;५,१९; सार २३५ : ६;७;९; शि ७,६०.
आविवेश क १,१,२; प्र ४,११; मना २,८§[k];२,१२,२§[l]; श्वे २ : १७; नृपू २,१०§[m]; अशि ६,१§[n]; मैत्रि ६,३८; भ २,७§[n]; शौ ५३ : १७§[l];५४ : १; २शिसं ३५§[n];
आविविक्षुः पिंब्र १,३.
आवेशय-आवेशय गरु १०; व ४३४ : १४.
आ-विश्य त्रिवि ५, १२[२]; १३; ६, २१; गोउ १५; वद्रु ३१६ : १८; भव २,४१; गी १५,१३;१७.
आ-विष्ट,ष्टा– -ष्टः अव्य ६![o]; गी १, २७; -ष्टम् मैत्रि ६, २४; ३१; गी २,१; -ष्टा सार २६७ : १८.
आविष्ट-चित्त– -त्तौ सार २८९ : ५.
आविष्ट-सुखा(ख-आढ्य>)-ढ्या– -ढ्या सार २८४ : ११.
आ-वेश– -शः ब्रसू ४,४,१५; -शाः सार २४९ : १३§[ii]; -शेन सार २४८ : १३; २५७ : १०.
आ-वेशित–
आवेशित-चेतस्– -तसाम् गी १२,७.
आ-वेश्य सर २,५;१०; गी ८,१०; १२,२.
आविस्[p]-* -विः मुं २, २, १; -वीः ऐ कौ नाद आवो निर्वा मुद्ग अद्व सौ सर व शां[r]§[q].
आविर(स्>र् √अ)स्[r], आविः... एधि ऐ कौ नाद आवो निर्वा मुद्ग अद्व सौ सर व शां[r]§[q].
आवि(स्>)र् √भू,>भावि, आविर्भवति पै ३, १; मवा ६; सार २५० : १३; १४; २७१ : ७; २८७ : १३; आविर्भवेत् नाद ३०.
आविर्बभूव गोपू २५; आविर्बभूवुः गोच ६९ : १३; आविर्भविष्यति गोच ६९ : १६; आविरभूवन् सार २६२ : १.
आविर्भावयति पै १,९.
आविर्-भाव– -वः मं १,३,३; त्रिवि २,६; ब्रसू ४,४,१; -वाः २४९ : २२; -वेन सार २२९ : ५; २३८ : १९.
आविर्भाव-ति(रस्>)रोधाना(न-आत्मक>)त्मिका– -का त्रिवि ३,७[s].
आविर्भाव-ति(रस्>)रोभाव– -वौ छां ७,२६,१.
आविर्भावतिरोभा(व>)वा[t]– -वा गोउ ६३[u].
आविर्भावतिरोभाव-ज्ञातृ– -ता ससा १,२४.
आविर्भावतिरोभाव-भाविन्– -विनः भव १,१८.
आविर्भावतिरोभाव-रहित– -तः ससा १,२५[v].
आविर्-भूत,ता– -तम् ग १३; अता ११; -तया सार २५० : १५; -ते मैत्रि ६,२८.

a) तैआ १०,१,५ । b) ऋ २,३,११ । c) शौ ११,८,१ । d) 'आवहम्' इति निसा.सुपा.यनि. सु-शोधः (तु. शौ ११,८,१) । e) तैआआ १०,३५ । f) तैआ ७, ४, १ । g) तैआ १०, ६३, १ । h) रू.? [तु. <आ √वृ वरण इति सा. (तैब्रा २, ८, ८,१),< √अव् इति शं. (तैउ.)] । i) कौ ३,१,९ । j) व्यु.? उस. पूप.<आ(आ-अ)-वा(व-√अ)र् पीडायामिति पाटी.,<आ √वृ आवरण इति BW. च । k) तैआ १०,१,६ । l) ऋ ४,५८,३ । m) मा ८,३६ । n) शौ ७, ९२, १ । o) '-दिष्टः' इति सुपा. यनि. सु-शोधः (तु. उव्र.) । p) व्यु. वैप१ यद्र. [तु. सा. (ऐआ २,७,१); वैतु. तत्रैव K २३६[i]] । q) ऐआ २,७,१ । r) तु. K. (ऐआ २,७,१); वैतु. सा. तत्रैव । s) °रोभावात्मिका इति निसा. । t) मत्वर्थे अच् प्र. । u) °भावा तिरो° इति व्यस्तः आन. पा. । v) '-हीनः' इति आन. ।

आविर्भूत—महा-प्रणव—
गरुड— -ढम् त्रिवि ५,१२.
आविर्भूत-स्व-रूप— -पः
त्रसू १,३,१९.
आवि(स्>)ष्√कृ, आविष्कृणोमि
वृ २,५,१६§[a].
आविष्करोति सार २४१:१०.
आविष्क्रियते मैत्रि ६,२२.
आविष्-कृत— -तम् मैत्रि ६,
३४; त्रसू ४,४,१६.
आविष्-कृत्य— सार २५२:१८.
आविस्-तर—
आविस्तराम् शौ ५३ : १०.
आ√वृ(वरणे),>वारि,आवृणीमहे स
शांड्[b]; §[c]व ४४१:१०; ४४६:
१७; ४५१ : १०; ४५४ : १६.
आ-वार्य[d] शि ७,११.
आ√वृ (आवरणे), आवृणुते नाद
३२; आवृणोति गौ ४, ८३;
अध्या १५; सर ३, १९; आ-
वृणोत् श्वे ६, १०[e]; भव २,
४८.
आव्रियते गौ ४,८२;गी ३,३८.
आ-वरण— -णम् राधा १,१५; सार
२८१ : १८; २८४ : ३; -णस्य
सार २८१:१; -णानि सूता५,४;
सार २२१ : २; -णे सार २८२:
२;६;७;१६;२८३:७;१४;१८;
२८४ : २;७;२८५ : १;२८७ :
२२;२८८ : १.
आवरण-च्युति— -तिः गौ४,९७.
आवरण-ज्योतिस्— -तिः सार
२८१ : १.
आवरण-मध्य— -ध्ये सार
२८१ : १९.
आवरण-लीला—वार्ता—
-र्तायाम् सार २८३ : २.
आवरण-विनाशन— -नम् कलि२.
आवरण-शक्ति— -क्तिः पै १, ६.
आ-वृत,ता— -तः गौ ४, ८४; रापू
४,३७;३८; प्रा १,६; अरु २१;
गी ३,३८; -तम् वृ १, २,१; श्वे
६,२; मना १,१§[f]; त्रिवि ६,३;
नाप ९, १८; ए १२; गोउ ४०;
सि ४,४;५,१८; ६,२५; गी ३,
३८[g];३९;५,१५; -ता गोउ२१;
गी १८, ३२; -ताः ई ३; वृ ४,
४,११§[h]; अन्न ४,३६; पाशु २,
३३; रुद्र ४९; स्व ६१ : ३; गी
१८,४८; -ताम् अरु २२§[i]; -ते
नाप ५,१२; वरा २,६२.
आ-वृति— -तिः १आ२८;रार३,१[२];
-तेः १आ २७[j]; -तौ सर ३,२१.
आवृति-नाश— -शेन सर ३,२२.
आ-वृत्य श्वे ३,१६; १योत ११६[k];
त्रिवि २, १५; वरा ५, ६१; सर
३, २१; मा १; गु ४८; गी ३,
४०;१३,१३;१४,९.
आ√वृञ्ज्, आ···वृञ्जते वृ ६,४,३[l].
आ√वृत्,>वर्ति,वरीवृत्, आवर्तते
प्र ५,४; छां ४,१७,९;८,१५,
१[२]; अ १; मै २,५; मैत्रि २,५;
गर्भ २; वृजा ७,२[२];७[२]; भ २,
२५[२]; रुजा ३,१[२]; काला २१[२];
नि ५७[२]; आवो ३१[२]; नाप ९,
२०[२]; श ३६[२];वा४०;४१;अव्य
३; १आ २५; सौ ३,१[२]; जाबा
२८;२९; द्व १७[२]; ऊ ६४:
१४[२]; वि ३३[२]; गी ८, ३६;
आवर्तन्ते प्र १,९; १०; छां ४,
१५, ५[२]; ५,३,२; अव्य ७; भ
२, १४; २८; आवर्ते कौ २,८;
९; आवर्तेय छां ४,४,५.
आववृत्स्व व ४६० : १०§[m];
ओ[n]···ववृत्याम् २संन्या१७:१.
आवर्तयति कालि ४०१ : १३;
आवर्तयत् छाग २३:१०; २४:
१२; आवर्तयेत् आरु २[२]; भ १,
११; गोपू २६[o]; २८[२]; २९[२];
४७; २प्र ३३:१६; कक्षु ३,१.
आवरीवर्ति अशि ६,११.
आ-वर्त[२२]— -र्तम् छां ४,१५,५; -र्तैः
महा ४,१०६.
आवर्त(त-अ)न्तर—कीट—
आवर्तान्तरकीट-वत् पै२,४९
आ-वर्तन— -नम् मै १,७; मैत्रि १,
४; पी ४२२ : ५.
आ-वर्तमान— -नः व ४३७ : ६§[p].
आ-वर्त्य पत्र २[q]; शि १, ३४; वउ
६,२६.
आ-वृत्— -वृतम् कौ २,८[२]; ९[२];
-वृता वृ ६,३,१; कौ २, ४;७[२];
८;९.
आ-वृत्त— -त्ताः छां २, २,३; -त्तेषु
छां २,२,२.
आवृत्त-चक्र— -क्रम् मैत्रि६,२८.
आवृत्त-चक्षुस्— -क्षुः क २, १,
१; मै ५,१; मैत्रि ६,१.
आ-वृत्ति— -त्तिः सांसू ३,५२;४,३;
२२;६,५६; त्रसू४,१,१; -त्तिम्
गी ८,२३; त्रसू १,३,३०; -त्त्या
रार ३,१.
आवृत्ति-योग— -गात् सांसू
१, ८२.
आ-वृत्य करु १[r]; कक्षु २,२.

a) ऋ १, ११६, १२ । b) खि १०, १९१, १५ । c) ऋ ८, २६, २१ । d) =वस्त्रोपहारपूर्वकम् । e) 'आवृणोति' इति निसा. । f) तैआ १०,१,१ । g) 'आवृतः' इति SCHR. [वैतु.वे.(NIA.२,२३१)] । h) मा ४०, ३ । i) तैआ १,२७,३ । j) 'अवृतेः' इति निसा.? । k) 'आहत्य' इति अज्ञा. संटि. । l) निसा. अनुपसृष्टं रू. । m) ऋ १०,८३,६ । n) 'आ-उ' इति समुदितं द्र. । o) 'आवर्तयन्' इति आन. । p) ऋ १,३५,२ । q) 'आवृत्य' इति निसा. । r) '-वृत्य' इति मुपा. यनि. सु-शोधः ।

आ√वृह्, आवृहेयुः वृ ३,९,२८,६.
आ√वे, ?आवयतः[a] कौ १,३.
ओ(आ-उ)त,ता- -तः वृ ३, ६,१; ८,७; ११; नृउ २,८; ८,१[3];३; ४; -तम् सुं २,२,५; ३,१,९; वृ ३,६,१; ८,३;४;६;७; मै ५,३; ते ३,५४; नृपू २, १०; नृउ ९, २०;शां२,१; त्रिब्रा२,४; १शिसं ५६[b]; २शिसं ६६[b]; कालि ४०२ः १७; -ताः वृ ३,६,१[10]; मैत्रि७, ७; सुबा १०[11]; गोउ १७; -तेन नृउ ९,२०.
ओत-त्व- -त्वात् नृउ २,९.
ओत-प्रोत- -तम् ब्र २; अशि ४,५[c]; ६,१०; त्रिता ४,१९; वट्ठ ३१५ः२०;३१७ः१४.
ओता(त-अ)नुज्ञात्र(तृ-अ)नुज्ञा-(ज्ञा-अ)विकल्प- -ल्पैः नृउ १, ११; २,८;९.
ओतानुज्ञात्रनुज्ञाविकल्प-रूप,पा- -पम् नृउ ३, ६; १०; -पा नृउ ३,१.
आ-वेदित- आ√विद्(ज्ञाने) द्र.
आ-वेश-, आ-वेश्य आ√विश् द्र.
आ√वेष्ट्
आ-वेष्टित- -तम् राधा १,१३.
आ√व्रज्, आव्रजेत् नृउ ९,२०.
आवव्राज वृ ४,१,१.
आ√शंस्, आशंसते वृ १, ४, १४; आशंस अव्य ३[d].
आ√शङ्क्, आशङ्क्यते सार २६५ः १२.
आ-शङ्क्य नि ४; ११.

आ-शशि-तार- -रम् वरा २,६६.
१आशा[e]- -शया छां ७,१४,२; महा ६,७५; -शा छां ७,१४,१;२६, १; वृ १,३,२८; २,४,२; ४,५, ३; अन्न ५,३८; प्रा ४,१; -शाः पा ८,८; -शाम् छां २, २२,२; ७, १४,१; २[2]; -शायाः छां ७, १४,२[2];१५,१.
आशा-निवृत्त- -त्तः नाप१;५,३९.
आशा-पत्नी- -त्नीम् मैत्रे २,१२.
आशा-पराकाश- -शौ वृ ६,४,१२.
आशा-पाश-विधायक- -कम् महा ५,१३३.
आशा-पाशा(श-अ)नल- -लम् १संन्या २,४८.
आशा-पाश-शत- -तैः गी१६,१२.
आशा-पिशाची- -चीम् मैत्रे १,४, १२.
आशा-प्रतीक्षा- -क्षे क १,१,८.
आशा-भुजं-ग- -गानाम् महा ५, १६६.
आशा-वशा(श-अ)नुग- -गम् अन्न ४,४०.
आशा-वैवश्य- -श्यम् अन्न ५,७.
आशा-शर-शलाका(का-आ)ढ्य- -ढ्याः महा ५,७७.
आशा(शा-अ)सूये(या-ई)र्ष्या-(र्ष्या-अ)हंकार- -रम् नाप २; १संन्या २,१.
आशे(शा-इ)द्ध- -द्धः छां ७,१४,१.
आशो(शा-उद्>)न्नू-मुख- -खे महा ६,७०.
२आशा[f]- -शाः महा ६,७९.

१आशा(शा-अ)म्बर[g]-
आशाम्बर-धर- -रः नाप५,३९.
२आशा(शा-अ)म्बर[h]- -रः पहं ४[i]; पप ४२०ः१४; या २,१.
आशा-विद्- -विदः रापू ४,२४.
आशा-व्याशा- -शासु रापू ५,५.
आ(आ-आ)शा(शा-अ)न्त- -न्तम् महा ५,४७.
आ√शास्,>शिस्, §[j]आशास्ते व ४४०ः२३;४४६ : ६;४५१ः३; ४५४ : ९.
आ-शास्य- -स्यम् भ १,१;२,१८.
आ-शास्यमान- -नः त्रिवि ५, ४; -नम् त्रिवि ७,२०.
आ-शिस्- -शिषः छां ७, १४, २; पा ४,७; योसू ४,१०; -शिषाम् गोउ ३; पा ४, ५[2]?[k]; -शिषि प्रा १, ६?[l]; -शिषे पा १०,८.
आ(शिस्>)शी-राशि- -शिः पा ४,५.
आ(शिस्>)शीः-समृद्धि- -द्धिः छां १,३,८.
आ(शिस्>)शीर्-युक्त- -क्तानि नाप ५,२०.
√आशि(<√अश् भोजने)
आशित[m]- -तम् वृ४,१,२;५,११.
आशि[n]- -शिः पा ४,५.
आशि-भू(त>)ता- -ता पा ४, ५.
आ-शिर्'- -शिरम् वा ८.
आ√शी
आ-शय- -यात् गी १५,८.
आशय-ज्ञ- -ज्ञः महा ६,६५.
आ-शयध्यै वा १८.

a)) आ-चय(त्>)न्ती-> -न्यौ इति शोधः द्र. (तु. वे. मूको. च शांआ ३,३ च पाभे. -तौ इति च -न्ति इति च)। b) मा ३४, ५। c) 'ओतम् प्रोतम्' इति अव्या.। d) अव्या. अनुपसृष्टः पा.। e) व्यु.? <√*आश् इच्छायाम् (तु. आशि-, यस्था. वैप१ च)। f) व्यु. वैप१ यद्र.। g) कस.। h) बस.। i) आकाशा° इति निसा.। j) ऋ १, २४, ११। k) °षम् इति सुपा. यनि. सु-शोधः। l) पा.? (तु. अव्या., सस्थ. √हु>होम्य-> -म्यम् इति च; वैतु. निसा. जुहोम्याशिष्यन्तः इति, आन. जुहोम्यमाशिष्यन्तः इति च तस्य तथा व्याख्यानं च)। m) तु. सस्थ. पायित- <√पायि<√पा पाने, वैप१ च यस्था.। n) =आशिस्-। व्यु.? <√*आश् इच्छायाम् (तु. १आशा-, यस्था. वैप १ च)।

आ-शीतल-
आशीतला(ल-अ)न्त(ई>):-
करण- -णः अन्न ५,६९.
आशु[a]- -शु[b] रापू ४, १६; २२; राउ ३,४; शां१,७,१२; महा२,३०; योशि १,१११;अन्न४,४२;यो१, ५२; वरा ४,३१; मु २,२,४; व ४६६:८![c]; -शु-शु रापू ४,२५; -शु[d]शुम् व ४४१ : २०; ४४७: ३; ४५१ : १७; ४५४ : २२.
आशिष्ठ[e]- -ष्ठः तै २,८,१.
आशुशुक्षणि[a]- -णिः मना २,७६§[f].
आश्चर्य[g]- -र्यः क१,२,७[2]; सार२४१: १९; -र्यम् बृजा ६,७;८; -र्याणि गी ११,६.
आश्चर्य-रूप- -पाः नृउ ९,१९.
आश्चर्य-वत् गी २,२९[3].
आश्म-,आश्मरथ्य- √अश्(व्याप्तौ) द्र.
आ√श्रम्
आ-श्रम- -मः सार २३१ : ५; २७९ : २; -मम् योशि १,९७; गोउ ३; शां ६; -माः गौर२,२७; ३,१६; पिंत्र६,१२; नाप६,१४; पाशु २, २२; सार २९० : ४; आश्र १; -मात् शि७,४६; -मान् नाप ६, १२; १अव २; -मे वरा १,१७; शा६; -मेण सार २८२: २१; -मेषु मै ४,३; मैत्रि ४,३; -मैः सुबा ९.
आश्रम-कर्मन्- -र्म त्रसू ३, ४, ३२.
आश्रम-क्रमा(म-अ)नुसार- -रेण नाप ५,१; १संन्या२,१३.
आश्रम-त्रय- -यम् नाप ६,२८.
आश्रम-पद- -दम् बृजा ६,५.
आश्रम-पार- -रम् २संन्या १५ : २.
आश्रम-वासिन्- -सिनाम् रार ५,१६.
आश्रमिन्- -मिभिः भव५,११; -मी मै ४,३; मैत्रि ४, ३; कुं १.
आ√श्रि, आश्रयते पिंत्र ४, २; आश्रयन्ति मैत्रि६,१८[2]; आश्रयसि महा ६, ३५; आश्रय त्रिवि ८, १२; महा ६,७२; वरा २, ८०; ३, ६; ८; पिंत्र २, ९; ३, १०; आश्रयेत पिंत्र ४,२![h]; आश्रयेत् नाप ५,२१; तै ६, १०१[i]; योशि ६,२९; रुह१२; वि९;गी१,३६.
आ-श्रय- -यः वरा ५, ५४[j]; पिंत्र २,२;१०[2]; ३,९; -यम् मैत्रे १, ४,१२[j]; पिंत्र २,१; सांका ४१; -येण मैत्रि ६,२७.
आश्रय-वर्जित- -तम् शि६,४०.
आश्रय-वश- -शात् मैत्रि६,३५.
आश्रय-विशेष- -षे सांसू ५, १२७.
आश्रया(य-अ-)भाव- -वात् महा २,८.
आश्रया(य-अ-)सिद्धि- -द्धेः सांसू ५,१२८.
आश्रयिन्-
आश्रय्या(यि-आ)श्रय-हीन- -नः मैत्रे ३,९[k].
आ-श्रित,ता-[l] -तः कै २, ५; अना ३५; मै ५, १; २; मैत्रि ६, १; २; ध्या ७; त्रवि ३५[l]; ७८; श ३६; राउ १,२; नाप ३,१५[m]; योशि ५,३२; जाद २,१४; वरा ५,५७; सार २७८ : १७; विद्या १; भव १, १; गी १२, ११; १५, १४; -तम् अन्न ४, ६१; शि ६, १४०; सांसू १, १२४; सांका १०; गी ९, ११; -तस्य मै १,७; मैत्रे १,२; -ता योशि ५, २२; -ताः महा ४,७४[2];५,३६; वरा २, ५५[2]; सार २९२ : ८; ९; शि १,३२; गी ७, १५;९, १३; -ते त्रिब्रा २,१२६..
आश्रित-त्व- -त्वात् त्रसू १, १,३१.
आश्रितो(त-उ)पाश्रित- -तैः शि ६,११२.
आ-श्रित्य त्र १; क्षु १२; नि १५; त्रवि ६४; नाप ३, ४२; २अव ३३८ : ९; त्रिब्रा २, २; ४; ८; १६६; मं २, ४, ४; शां १, ४; पै २, ३९; ५१; महा ४, १५; ९३; १०४; १२८; ५, ८४; १संन्या २, ९६; अन्न ४, ९०; त्रिता १,१; करु ३१; वरा २, ४५; व ४५८ : ७; भव १,२२; ५०;२,१४; पिंत्र ६,१८; गी७, २९;१६,१०;१८,५९.
आ√श्रिष्
आ-श्रेषा[a]- -षायै व ४३८ : ३.
आ√श्रु>श्रावि, आश्रावयति छां १, १,९; आश्रावयन्ति तै १,८,१.
आ√श्लिष्, आश्लिष्यन्ति मैत्रि ७,८.
आश्वतराश्वि- √अश् (व्याप्तौ) द्र.
आश्वत्थ- अश्वत्थ- द्र.
आश्वलायन- √अश् (व्याप्तौ) द्र.
आ√श्वस्,>श्वासि
आ-श्वस्त-
आश्वस्त-मति- -तिः महा६,६९.

a) व्यु. वैप१ यद्र. । b) वा. क्रिवि. भवति । c) 'आसु' इति मुपा. यनि. सु-शोधः । d) ऋ १, ९१, २० । e) यत्तु आन. 'आशास्तृतमः' इतीव शं. भाष्यं पिपाठयिषितम् । तन्न । द्विप्रकारित्वस्यैव श्रुतिप्रसङ्गानुकूलतरत्वात् (तु.संटि. संकेतितैः मूको.यनि.पोषः) । f) ऋ २,१,१ । g) व्यु.? (तु. पा ६,१,१४ <आ√चर् इति) । h) 'आश्रयत' इति मुपा. यनि. सु-शोधः । i) 'आप्नुयात्' इति अव्या. । j) °यन्तम् इति अव्या. । k) °श्रयाश्रयि° इति अव्या. । l) 'आस्थितः' इति अव्या. । m) '-ताः' इति अव्या. ।

*आ-श्वासया-
*आश्वासयाम(म्√अ)स्, आश्वासयामास गी ११,५०.
आश्विन- √अश् (व्याप्तौ) द्र.
√आस्, आस्ते तै ३,१०,५; बृ ४,३, २-६; मना२,४०§[a]; कौ१,१§[b]; ५; नृउ९,८; पै३,२; अद्वि३३; यो१,६८; जाद १०,१३[c]; त्रिब्रा २,३७§[d]; आसाते सार २७१: २०; आसते बृ २, २, ३[2]; मना २,४०§[a]; नृपू५,८; सार २४३: १९; आस्से छां ४,२,४; आध्वै छाग २३: ३; आस्ताम् महा २, २२; वरा २,६६; सार२४९:९; आसाताम् सार २८९: ५; ६; आसताम् सार२५०:१९;२५१: ७; आस्स्व बृ २,४,४; अन्न ५, ११५; अद्वि २; आस्त सार २२०:७;२५१:७;२५२: १०; १४; २८५: १६; २८६: १७; आसत छाग२३:१;९;२४:१२; सार२४८:२३;२४९:४;२५२: १४;१७;२६२: २१;२७५:७; आसीत कौ २, १५§[e]; सौ २, २[1f]; गी २, ५४; ६१; ६, १४; आसीरन् छां ७,१३,१.
आसिष्टअव्य२;आसिषम्अव्य१
आसन- -नम् बृ ६, २,४; क्षु २; तै १,१५;२५; २अव ३३७:५; १योत २४; त्रिब्रा २, २९; ३५; ४४;४६;५२;९१[2];९२;योचू२; मं २,२,५; ध्या ४१; शां १,३, १२; योशि १, ७०; ५, ३६; १संन्या २,७९;८०; अद्वि २६; भा ३०; यो१,२;४;५३;२,४५; जाद १,४;३,१३;५,५; वरा५, ११; योरा २; आपू २; राधा २, ८; सार २३८: ८; शि ७,३५; ६४;८७; ९०;९१; वउ ५,३२; ६,१८; २७;३५; सांसू ३, ३३; ६,२४; योसू २,४६; गी ६,११; -नात् सार २३४ : १८; -नानि ध्या ४२; त्रिब्रा २, ३४; शां १, १;३,१; वरा ५, १५; -ने त्रिब्रा २,९०; यो १, २३; गी ६, १२; -नेन तै१,११,३; शां १,३,१२; योचू १०९; -नैः त्रिब्रा २,५३.
आसन-दृढ- -ढः शां १,७,१.
आसन-नियम- -मः मं १,१,५.
आसन-बन्ध-
आसनबन्ध-तस् (>:)योशि १,१२६.
आसनबन्धा(न्ध-आ)दि- -दि वउ ६,४.
आसन-भूषण- -णम् शि७,१२.
आसन-भेद- -दान् सार २७० : १७.
आसनभेद-संयोग-सुख-दातृ- -दात्रे सार २५१ : २३.
आसनभेदा(द-अ)भि(ज्ञ>)-ज्ञा[1]- -ज्ञा सार २८४ : १६.
आसन-शयना(न-आ)दिक- -कम् आरु ४[g].
आसन-स्थ- -स्थस्य १योत५२.
आसना(न-अ)न्तर-योजना- -ना वउ ६,३७.
आसना(न-अ)शन-योग- -गेन अन्न ४,८७.
*आसा-
*आसां√कृ,आसांचक्रे बृ ४,१, १; आसांचक्रिरे छां १,१०,११.
आसीन- -नः क १, २,२१; बृ ६, ३,६; महा २, ४७; १संन्या २, ३३; नाप ३,४४; द ५;म २,३; सूता १, २४; शि ७, १६;३१; ब्रसू ४,१,७; गी १४,२३; -नम् क २, २, ३; कौ १,१§[h]; अव्य ६; शि ७, ३१; रा ४२३:४; पिंत्र १,४; गी ९, ९; -नाः छां ८,६,४; म २,२९.
आ√सञ्ज्
आ-सक्त- -क्तः मै ४,२[i];सार२९१: ९; -क्ताः सार २२०: १८; २७४: १.
आसक्त-मनस्- -नाः गी ७,१.
आ-सक्ति- -क्तिः सार २३१:९; २५६: १७;२५७: २.
आ-सत्य-लोक-
आसत्यलोका(क-अ)न्त- -न्तम् त्रिवि ३,४[j].
आ√सद्, >सीद्,सादि,आसीदन्ति सार २६६:२१;२७४:३;२८१: १२; आसीद नाप ४, ३८§[k]; §[l]आ...सीद त्रिता ३,२८; व ४२९: १०.
आसादयति भ २, १५; आसादयसि अन्न ४,७५;७७.
आसाद्यते महा ४,२८;५,११४; ६,२६; अन्न १,२७.
आ-सन्न- -न्नः योसू १,२१.
आ-सादि(त>)ता- -ता सार २४३ : २२.
आ-साद्य कौ १,१,३§[m]; नाप१;२[2]; ८, १[2]; पै ३, १; महा ३, ३७; ५,६६;६,३३; १संन्या २,५५; अन्न ३, १७; १८; मं २, ४,४; त्रिवि१,४;५,१२;६,२१;तु१४; सि ६,२९;३१;३२; गी९,२०.

a) तैसं ४,२,९,६ । b) 'अस्ति' इति आन. शांआ ३,१. च । c) 'आस्थे' इति अब्या. संटि. । d) तैब्रा ३,१२,७ । e) 'आसीनाय' इति शांआ ४,१५। f) °शीत° इति मुपा. यनि. सु-शोधः (तु. अव्या.) । g) '-नाम्याम्' इति आन. । h) 'अभ्यागतम्' इति बे., शांआ ३,१ । i) 'सक्तः' इति अव्या. । j) आ-सत्य-(=अस.)>°लोक-(तस.)>-कानाम् इति अव्या. । k) तैब्रा २,५,८,८ । l) ऋ २,२३,१। m) 'आपद्य' इति आन., बे., शांआ ३,३. च।

आ-सेदिवस्– -दिवान् सार २२९: ९;२७४:६;१८;२७५:११; १६; -दुषः सार २८८:१२; -दुषाम् सार २८१:७.
आसेदुषी– -षी सार २८६:५; -ष्यः सार २६५:१५;२७६:२.
आसन्[11a]– -सन् मना २, ७२§[b]; -स्नि मैत्रि ६,३६.
आसन्य– -न्यम् वृ १,३,७.
आसन्दी[11]– -न्दी कौ १,३[?c]; -न्दीम् कौ १,५.
आ-सव्य-कर्ण–
आसव्यकर्णा(र्ण-अ)न्त– -न्तम् शां १,४.
'आसा– √आस् द्र.
आ√सिच्,>ञ्चु, आसिञ्चतु वृ ६,४,२१.
आ-सिक्त– -क्तम् क २,१,१५.
आ-सिच्यमा(न>)ना– -ना सौ १,२.
आ√सु (अभिषवे)
आ-सुत– -तम् छां ५,१२,१.
आसुर– १असुर– द्र.
आसुरायण–,आसुरि– २असुर– द्र.
आ√सु(प्रेरणे),आसुव मना २,३९§[d].
आ√सृप्, आससृपुः छां १, १२,४.
आ√सेव्, आसेवते सार २८७:९.
आ-सेवमान– -नाः सार२७९:११.
आ-सेवा– -वाम् सार २२९:५.
आ√स्कन्द्,आस्कन्दन् छाग२५:१४
आस्तिक– √अस्(भुवि) द्र.
आ√स्तु
आ-स्ताव[11]– -वे छां १,१०,८.
आ√स्तृ>स्तर्
आ-स्तरण– -णानि सार २८६:२२.
आस्तरण-यु(क्त>)क्ता– -क्ताः सार २६७:८.
आ√स्था,>तिष्ठ्, आतिष्ठ गी ४, ४२; आतिष्ठेत् त्रिव्रा २, ४१; १संन्या २,९७.
आ...तस्थुः श्वे २,५§[e].
आ-स्था– -स्था महा ३, ११; अन्न ५,११; भव १,२१;-स्थाम् महा ६,३४.
आस्था-परिग्रह– -हः महा ४,१११.
आस्था-परिवर्जन– -नम् महा ४,११०.
आस्था-मात्र– -त्रम् महा५,८५.
आ-स्थाय मै १,१; मैत्रि १,२; मैत्रे १,१;कै१,१२;क्षुर२;१योत ६९; नाप ५,१५; श ४; त्रिविं ८,५; त्रिव्रा २,८९[f]; महा ५,८८;अन्न ३,२; ४,५०; कुं १८; जाद ६, ३२;इ १६:२; हे ९; गी७,२०.
आ-स्थित,ता– -तः व्र २; लु २१; व्रवि ७१; नाप ३,८०; योशि५, ३६; अन्न १,१०; यो १,५३; पा ३,२;गी५,४;६,३१;७,१८;८, १२; -तम् रुद्व३४;-ताः मैत्रि४, २; गी ३,२०; -ताम् अक्षि १३.
आ-स्थिति– -तिः द १५.
आस्पद– -दम् अन्न ४,२३.
आ√स्फ(र्>)ल्>स्फालि, आ-स्फालयेत् वरा ५,६०;६२.
आस्य[11a]– -स्यम् छां ५,१८,२; मैत्रि ६,३६; -स्यात् छां १, २,१२; -स्ये वृ १,३,८; -स्येन नाप ५, ११; १संन्या २,७८.
आस्य-नासिका– -कयोः त्रिव्रा २, ७९; जाद ४,२६.
आस्य-नासिका-कण्ठ-नाभि-पादा-ङ्गुष्ठद्वय-कुण्डल्यधऊर्ध्वभाग- -गेषु शां १,४[?g].
आस्य-पात्र– -त्रेण १संन्या २,५९.
आ√स्रु, आस्रवति वृ ४,२,३.
आ-स्रवत्– -वत् वृ ४,२,३.
आ√स्वद्,>स्वादि, आस्वादयेत् गौ ३,४५.
आस्वाद्यते महा३,४२; या२,८.
आ-स्वाद–
आस्वाद-वश– -शात् यो१,७३.
आ-स्वादित– -तः जाद ६,४८.
√आह्[a], आह क १,१,१५; तै १,८, १; छां १,१,८; वृ १,४,३; जा ४; मना २,७८§[h]; पहं१; अशि ७,७; मै२,३; कौ १,३[i]; आहुः ई १०[2]; के १,५; क १,३, ४[2]; प्र १,११[2]; छां २,१,२[2]; वृ १, ३, २७; श्वे ३, १९; गौ २, १; कौ ३,२; अशि ५,७; मै ५;७[3]; आत्थ क १, १, २२; छां ४,१, ३; वृ ३,९,१०; गी ११,३.
आहंकारिक– अस्मद्– द्र.
आ√हन्, आहन्ति मैत्रि ७,११.
आ-हत,ता– -तः व्रवि १८; -तम् भ२,२; -ता यो १,४३[?j]; -तात् वृ ३,९,२८,२.
आ-हत्य वरा १,७;१५.
आ-हर–, आ-हरण–, आ-हरत्– आ√हृ द्र.
आ-हव[11]– आ√ह्वे द्र.
आ-हवन– आ√हु द्र.
*आ-हारया–,आ-हार्य आ√हृ द्र.
आ√हिंस्, आहिंसत् पा ६,३.
आ-हित– आ√धा द्र.

a) व्यु. वैप१ यद्र.। b) शौ १९, ६०, १। c) निसा. -न्धि(?न्धी<>न्दी) इति, अव्या. °ण(?णा=णा+आ)सन्धि(?न्धी) इति च विकृतौ सन्तौ सुपा. यनि. सु-शोधौ (तु. आन., JC.)। d) ऋ ५,८२,५। e) ऋ १०, १३,१। f) 'आसाद्य' इति निसा.। g) °धश्चो° इति निसा.सुपा.यनि.सु-शोधः। h) तैआ १०,६२,१। i) 'तं...अभि-धावत' (इति स्वजनान्) 'ब्रह्माऽऽह' इति वा. (तु. आन.; वैतु. अव्या. शांआ ३, ३ च 'ब्रह्मा ह्यभिधावत' इत्ययुक्त इव पा.)। j) 'हता' इति अव्या. सुपा. यनि. सु-शोधः।

आ√हु
आ-हवन-
आहवनीय[११]- -यः प्र ४,३; छां ४, १३, १;५, १८,२; मना २, ७९§[a]; ८०§[b]; गर्भ ५[c]; अग्नि १,६; अ १; मै ५,५; मैत्रि ६, ५; ३४; नृपू २,२; नृउ ३,४; जावा २४; काला १६; त्रवि ६; प्रा २, १; १प्र ३१ : ९; -यम् मैत्रि ६,३६; पं ७; कश्रु २,३; -यस्य छां २, २४, ११; -यात् नाप ३,७७; -ये छां ४,१७,६; १संन्या १,१; प्रा१,६; कश्रु१,१.
आहवनीय-गार्हपत्य-दक्षिण-सभ्या(भ्य-अ)ग्नि- -ग्निषु पत्र२.
आहवनीय-गार्हपत्य-दक्षिणा-(ण-अ)ग्नि-रू(प>)पा- -पा गार ४०७ : १.
आ-हुत- -तः, -तम् इ १२ : ११.
आ-हुति[११]- -तयः मुं१,२,५;६;मना २,२६§[d];कौ२,५; मैत्रि६,९; प्रा २,१;-तिःमना२,८०§[b];२संन्या १६:१; मैत्रि ६,३७; शि४,५१; -तिभिः वउ६,४६;-तिम् छां५, १९,१; -ती प्र४,४; -तीः मुं १, २, २; ५![e]; बृ ३,१,८; प्रा २, १;-तेः छां ५,४-८,२; -तौ छां ५,३,३; ९, १; -त्याम् बृ ६,२, २; -त्यै बृ ६,२,९-१३.
आहुति-वत् नाप ३,७.
आहुति-विधि- -धिम् नाप ४, ३८.
आ√हृ,>हारि, आहर छां ४, ४,५; ६,१२,१;१३,१; बृ ३,२,१२; आहर-आहर छां १, १२, ५; आहरत् छां १,१२,५; पा १०, ५; आहरेत् बृजा ३,१;६;१०; १९;२९; १संन्या २,५९. आजहार छां १,१०,५;४,२,५; आजह्रुः छां १, २, १; महा २, २६; आहरिष्यामि बृजा३, १९.
आ-हर[f]- -रः पा २, ४.
आ-हरण- -णम् शां १, ८; जाद ७, २.
आहरण-धारण-प्रकाश-कर- -रम् सांका ३२.
आ-हरत्- -रन् अन्न५,३९; १संन्या २,५९; नाप २;३,८६;७[२].
आ-हार[११]- -रः मव३,२१; गी१७, ७; -रम् मना २,१३,२§[g]; नाप २; ५,११; ७; १संन्या २,५९; ७८; शि ५,५; ६, २२८; -रस्य १संन्या २, ५९; -राः गर्भ ४; १योत १२३[h]; निरु १,१७; गी १७, ८; ९.
आहार-पर- -रः नाप ५, १; १संन्या २,१३.
आहार-परिमाण- -णात् गर्भ५[i].
आहार-शुद्धि- -द्धौ छां ७,२६, २; पाशु २,३६.
आहारा(र-आ)चार-धर्म- -र्माणाम् शि ७,३९.
आहारा(र-आ)पान-सिक्त-
आहारापानसिक्त-त्व- -त्वात् निरु २,४.
*आ-हारया-
*आहारयां√कृ,आहारयांचकार बृ ६,२,४.
आ-हार्य- -र्यम् सांका ३२.
आ-हृत-
आहृतो(त-उ)ञ्छ-वृत्ति- -त्तिम् आश्र २.
आ-हृत्य तै १, ११,१; बृ ६, ३,४; जा ४; ध्या ३५; नाप ३, ७७; पप ४१८ : १३; कुं २; कठ १; या १,१; गोच६५:४; कश्रु२,३.
आहो[j] तै २, ६ ,१; बृ ३, २,११; गी १७ ,१
आ√ह्लाद्
आ-ह्लाद- -दाः छां ७,११,१.
आ√ह्लाद्
आ-ह्लाद- -दः गोच ६७ : ६;९.
आ-ह्लादन- -नम् गोच ६७ : ६.
आ√ह्वे, आह्वयति छां ७, १२,१; कौ २,१५; आह्वयीत शि ७,२२. आजुहाव शु ३,२१.
आ-हव[११]- -वे रापू ४, २३; २८; गी १, ३१.
आ-हूय रापू ४,२०; २४; २७; पी ४२१ : ७.
आ-ह्वयितवै आर्षे ७ : १.
आ-ह्वान-
आह्वान-कर्मन्- -र्मणि त्रिता २,३३.

---

# इ

इ[k]
इं त्रिवि ७, ३६; आथ ३९८:५![l]; व ४३५ : ६.
इं-कार- -०र अन्न ५.
√इ, अयते[m] छां १,२,१२; सार२२७: १८; पुति क१,१,१७;२,३,१६;

a) तैआ १०,६३,१। b) तैआ १०,६४,१। c) '-यम्' इति आन. अज्या. च। d) तैआ १०,१९,१। e) 'आहुतयः' इति मुपा. 'आहुतीर् यः' इत्येवं सु-शोधः (तु. सस्थ.टि. आ√धा> ?आद(धा>)दायत्-)। f) वैतु. पाटी. क्विप. इति। g) तैआ १०,११,२। h) '-रः' इति संटि., निसा.। i) विशिष्ट इह अज्या. पा.। j) न्यु.? *आत्यो [<आत्थ(<√आह्)+उ] इत्यस्य नैप्र. विपरिणामः स्यात् (वैतु. वाच., शक. <आ√हन् इति)। प्रश्नेऽन्तर्गः नि. द्र. (तु. वैप१, CVI[४]; पंजा. अभ्युपगमतात्पर्यके प्रश्नेऽस्य प्रयोगश्च)। k) =वर्णः। l) 'ई' इति मुपा. यनि. सु-शोधः। m) तु. वैप१,३९२b, तत्रैव यस्था. √इ इति च।

छां १,५,१;३; २, ११-२०,२; २३,१;३,१७,२;३;४,११-१३, २;१५,५;५,१०,१;३;८,३,३; ५;६,६; बृ १, २,३; २,१,१०; १२;४,१,३; ४;६;७; ५,३,१; ६,२,१५;१६; श्वे १,६; ४,११; १४; कौ २,१४; ४,१२; हं ५; मैत्रि ४,६;६,१७;२२;२७$^2$; कै १,१२;१३; जा ५; ना ३; अशि ५,६; काला २१; नाप ३,५१; ९,५; सुबा ९; मं १, २, १०; श ३६; त्रिवि १, १२; ३, ५; ८,२३; मुद्ग २; शां २,१; महा २,६४; ४, ११७;५, २९; ७१; १०२;१११;१२०;१२९;१५४; ६,५२; ७५$^2$; योशि १, १२६; ६,४; अन्न १,३२;४,७२; त्रिता ४,२४; भ १, ११; २, ८;२४; या २, १; वरा २, ३६; ३,११; ४,५; योचू ९४; कलि ३; मु १,१,५०; २, २, ३४; ३७; त्रि १२;१५; आर्षे ८:१२;१८;२१; ९:७-९; छाग२५:१३; बा१४; सुता १,१५; का ३; गोच ६७: १७;नार २; सं २३$^2$;सार२४४: २;२६४ : २२;२६७ : २३; नो १,३; १शिसं १६[a]; २शिसं ८६[a]; सु२९४ : ४; पारा १; स ३८०: २; गु ५७; अरु २६$^2$; भव २, ४;३,१६[b];३२; गी ४,९$^2$;८,६; ११, ५५; यन्ति क २, १, २; तै १,४,३;२,३,१; छां १,९,१; बृ ३,९,५$^2$; मैत्रि ६,११;१५; तपू १,१४[c]; बा ६; सार २४८: १५; २शिसं २; वपू १,२; एषि महा ४,६०; एमि क १,१,५; शौ ५३ : ९; एतु मना १,९§[d]; २,३८$^2$§[e]; ५५§[d]; वरा २,६६; नी १,३; व ४६४:२§[d]; आयन् मना २, ७९§[f]; अशि १, १[g]; व ४६६ : १५§[h]; च २१:१५; नृष ८४ : १; ऐम बृ ३, ३, १; इयात् बृ १, ३, १०$^2$; ६, ४, १४-१८; नाद५५; १योत११०; त्रिब्रा २,१२९; यो १,७७; जाद ६,२५; इयाम् वा १३?[i].

इयाय छां १,१०,७; कौ ३,१; ईयतुः कौ ४, १८[j]; एष्यति गौ ३,२०;४,६; ग ६; अन्न १,४०; ४१; गी ८,७; ९, ३४;१८,६५; ६८; एष्यामि १संन्या २, ५२. ईयते बृ २,५,१९.

अयसे[k] वा २२.

इत्वा- -त्या कौ ३,५; -त्याः कौ १, ७; ३,६; -त्याम् कौ २, १५$^2$[l]; ३,७$^2$;८.

एतृ- -ता छां २, २४, ५;९;१५; -तारम् कौ ३,८; मैत्रि ४,४.

एष्यत्- -ष्यन् बृ ४,२,१.

यत्- यत् बृ २,३,१; यन् छां४,१६, १$^2$; यन्तः अरु ३१; यन्तम् बृ २,१,१०.

इक्षु[m]-

इक्षु-दण्ड- -ण्डानि शि ६,२५.

इक्षु-धनुस्- -नुः मा २३.

इक्षु-पर्ण- -र्णानि शि ६,२६.

इक्षु-रस-संख्या(स>)सा- -सा आवो १३.

इक्ष्वाकु[1m]- -कवे गी ४,१.

ऐक्ष्वाक- -०क मै १, १; मैत्रि १,२; -के सं ११.

इक्ष्वाकु-वंश-ध्वज- -०ज मैत्रि २,१

इक्ष्वाकुवंशध्वज-शीर्ष- -०र्ष मै २,१; मैत्रे १,४,१.

√इङ्ग्,>इङ्गि, इङ्गते छाग २५ : ९; १८; गी ६,१९;१४,२३; इङ्गेत् छाग २५ : १३.

§[n]इङ्गयन्ति सर २, ६; नापू ५, ३३.

√*इच्छ्,इष्(इच्छायाम्)>एषि, इच्छते छां ७,३,१$^2$;१४,१$^2$; बृ १,४,१६; इच्छति क १,२,१६; मै ५,४; मैत्रि ६,४;३४; पै ४, १६; योशि१,६३$^2$;इ१८:१८; गु ३३; पिंत्र३,६; गी७,२१; इच्छन्ते बृ १, ४, १५; इच्छन्ति बृ १, ४,१६; गौ ३,२०;४,३;६; नृपू १,७; वरा१,१; इ ११:२२; सार २७८:१४; इच्छसि क १,१,२३; अन्न ४, ८६; गी ११, ७; १८, ६०; ६३; इच्छामि सु १,११; त्रिवि ३, १; योशि २, १; पप ४१७ : ३; कुं ९; पाशु १, २; १अव १४; मु १, १, ५; गार ४०५ : २; गी १,३५; ११,३; ३१;४६;१८,१; इच्छामहे रुजा ३,१; इच्छासै बृ ६,२,७; इच्छ बृ ६,४,१९; गी १२,९; इच्छध्वम् अरु १५§[o]; ऐच्छत् बृ १, ४,३; ऐच्छन् नृउ ६,१; इच्छेत बृ१,३,२५; नाप ३,१२[p]; इच्छेत् बृ १, ४, १६; ६, ४, ९-१२; १४-१८; ब्रवि १६; १संन्या २, ६१; त्रिता ५,१६; यो ३, ४; २प्र ३३:१५; अवि १६; इच्छेय छां ७,३,१$^2$.

इष्यते गौ ४, २५$^2$; ३७$^2$; ६४; ६६; ८७$^2$; ९६; मु १, १, २३;

a) मा ३४, १। b) 'तीर्त्वा' इति मा ४०, १४। c) 'यान्ति' इति निसा.। d) ऋ १०, १५२, २। e) तैआ १०,४८,१। f) तैआ १०,६३,१। g) 'अगमन्' इति अव्या.। h) ऋ ९,९४,४। i) पा.? 'इमाम्' इति वे.। j) 'आजग्मतुः' इति आन.। k) तुमर्थे असे प्र.[पा३,४,९ (एतदनु गपू.९२ पृ.अयस्->-यसे इति सु-शोधम्)]। l) '-त्याः' इति आन. अव्या. च। m) व्यु. वैप१ यद्र.। n) ऋ १,१६४,४५। o) तैआ १,२७,२। p) 'इच्छन्ति' इति अव्या.।

त्रवि ३; ७; ते ५, २३; १योत १०८; त्रिब्रा २, ४८;५५; ५९; १३५; अता १०; मुद्र २; शां१, ४; अन्न२,२३; अध्या १२;४४; ४७; ४९; त्रिता ५,१;७; जाद ४,१८; १९; २१; २२; शि १, २४; भव ४,४; अवि३;७;सांका २८;४४; इच्येते गौ १,११.

इच्छत्– -च्छता योशि २, २१; वरा २,८३;५,२;त्रवि १२; १प्र ३१: २२[a]; शि ६,३९; -च्छत्सु पिंत्र ३,६; -च्छद्भिः स्व६२:३;-च्छन् क २,१,१;छां८,३,२;९,२;१०, ३;११,२; बृ १, ४, १७; ४,१, १;४,१२; वरा २,१५; शा २२; -च्छन्तःक१,२,१५;बृ४,४,२२; गौ४,१०;मना२,६७ड्ड[b]; मु३९; गी८,११; -च्छन्तौ छां८,७,३[२].

इच्छा– -च्छया अना३०; सुबा११; योशि १,११०; शि ४,२७;३०; ५, २६; ६, १८०; -च्छा सुबा ११; १योत १०७; योचू ८६; वरा ४,३; महा ५, २७; १३२; १७३; अन्न ४,७[२]; सार २५८: १७; मु १, १, २९; पा १०, ८; गी १३,६; -च्छाम् महा ६,५१.

ऐच्छिक– -कः त्रिवि २,७.

इच्छा-क्रिया(या–अ)न्वित– -तम् पं ४.

इच्छा-ज्ञान-क्रिया(या–आ)-त्मक–ब्रह्म–ग्रन्थि–

इच्छाज्ञानक्रियात्मकब्रह्म-ग्रन्थि-मत्–

इच्छाज्ञानक्रियात्मकब्रह्म-ग्रन्थिमद्र(त्–र)स-तन्तु–ब्रह्म-नाडी– -डी भा ३३.

इच्छा-ज्ञान-क्रिया-शक्ति–रू-(प>)पा– -पा गार ४०७:४.

इच्छा(च्छा-आ)दि– -दिः ससा १,२१.

इच्छा-द्वेष-समुत्थ– -त्थेन १संन्या २,३०; गी ७,२७.

इच्छा-मय– -येन मैत्रि ६,२८.

इच्छा-मात्र– -त्रम् गौ १, ८; महा ४,११६.

इच्छा-रूप,पा– -पः योशि १, ४३; -पाः योशि १,१५५.

इच्छा-वश– -शात् त्रिवि ३,७.

इच्छा-शक्ति– -क्तिः सी ११; १२; ३५; काला १५; भा ७; जावा २३.

इच्छाशक्ति-रू(प>)पा– -पाम् विद्या ३.

इच्छाशक्ति–स्व-रूप–

इच्छाशक्तिस्वरूपि-(न्>)णी– -णीम् विद्या २.

इच्छाशक्त्या(क्ति-आत्मक>)त्मिका– -काम् विद्या १.

इच्छा-सिद्धि– -द्धिः आथ३९३: ८; ३९९ : २.

१इष्ट,ष्टा– -ष्टः अध्या ५६; गी १८, ६४; -ष्टम् त्रिब्रा२,५९; नि ५२; त्रिवि ५,४[२]; महा ३, २९; ३०; नाप ३, ६३[c]; १अव २०; सार २५०:१३; शि ३, १२; ६,३८; व ४३७ : ५; ४६५ : १; सांका ४;१३; गी १८, १२; -ष्टा त्रि ६; -ष्टाः गी १७,९; -ष्टान् गी ३,१२; -ष्टे लिं ३११:८; -ष्टेषु मै ३,५; मैत्रि ३,५.

इष्ट-काम-दुह्– -धुक् गी३,१०.

इष्ट-तम– -मम् गोउ ३.

इष्टतम–वस्तु-पात्र-देह-(ह–आ)दि– -दि सार२२७:१४.

इष्ट-(द>)दा– -दाम् १योत १०५.

इष्ट-देवता– -ताम् १योत ३६; व ४३४ : २१.

इष्टदेवता-संप्रयोग– -गः योसू २,४४.

इष्ट-प्राणा(ण–अ-)भाव– -वेषु लिं ३११ : ७.

इष्ट-फल– -लम् प्र ४,४.

इष्ट-विपत्ति– -त्तिषु भव १,२८.

इष्ट-विषय– -ये त्रिवि ५,४;ससा १,१८.

इष्ट-संसिद्धि– -द्धयै रार ४,१२.

इष्टा(ष्ट-अ)निष्ट–शब्द–संज्ञ- -ज्ञाः गर्भ १[d].

इष्टा(ष्ट-अ)निष्टो(ष्ट–उ)पपत्ति- -त्तिषु गी १३,९.

इष्टा(ष्ट-अ)र्थ– -र्थे रार २, ३; ८२;९६; सर २,१-३.

इष्टार्थ-सिद्धि– -द्धये व ४३६:१.

एषणा– -णे बृ ३,५,१;४,४,२२.

एषणा-त्रय–

एषणात्रय-वत्[e]– -वान् ते ३,४६.

एषणात्रय-वासनात्रय-ममत्वा(त्व-अ)हंकारा(र–आ)-दिक– -कम् पप ४१८ : २.

एष्टव्य– -व्याः इ १९ : १३.

इज्या–, इज्यमान– √यज् द्र.

इडा[२२](>ला)[f]– -डया ध्या२०; १योत ३७; ३९; ४१; त्रिब्रा २,९६; योशि १,९३; योचू९८; शां १, ५[२]; ६; ७,१; १४; ४८; यो १, २४;२७;३७; जाद५,७[g];९;६, ३;९[२]; २७;२८; -डा बृ ६,४, २८; क्षु१६; ध्या५२;५५; त्रिब्रा २,७०[२]; योचू १६;१८; शां १, ४[२]; योशि ५,१८;६,६; भा१४; जाद ४,७;१३; १९; प्रा ३,१;

a) 'इच्छति' इति मुपा. यनि. सु-शोधः। b) तैआ्रा १०,६७। c) 'सृष्टम्' इति अध्या.। d) °निष्टाः शब्द° इति आन.। e) नेष° इति मुपा. नैष° इत्येवं सु-शोधः। f) व्यु. वैप१ यद्र.। g) 'इडायाः' इति अध्या. संटि.।

४,१; सौ ३,१; कुपु १६; योरा १२; -डायाः जाद ४,१४;३५; ४६[a]; -डायाम् शां १,४; योशि ५,१९; यो १, १०; जाद ४, ३९;४०;४१[b].

इडा(डा-आख्य>)ख्या- -ख्या वरा ५, २६.

इडा(डा-आ)दि-मार्ग-द्वय- -यम् शां १,७,३७.

इडा-पिङ्गला- -लयोः जाद ४,४२; वरा ५,६७; शां १,७,४१;योशि ६,९.

इडा-पिङ्गला-सुषुम्ना- -म्नाः ध्या ५५.

इडा-पिङ्गला-सौषुम्न- -म्नाःयोचू२१

इडा-पृष्ठ-भाग- -गात् शां १,४.

इत्[c] के ४,४[d]; तै ३, १०,६; छां ३, १७,७§[e]; बृ १, ३,१०;५,२३; श्वे २,४§[f]; बृजा ६,१२§[g]; नृपू २,१८§[h]; राउ ५, २९§[g]; नी १,६§[i]; २शिसं ३३§[j].

१इतर[c],रा- -रः ऐ ४,४; बृ १, ४, ४[i];२,४,१४[i];४,५,१५[c];गौ१, २९; कौ २,१५; मना २,४६§[k]; सुबा २[३]; १योत २८; नाप ३,४; महा २,११;अन्न २,४;-रत्[1] गौ ३,२३; महा ४,२८;योशि४,३; ९[३];अन्न५,८; सुर,२,७; ब१३; सांसू ३,७;६४; ब्रसू ३,४,३९; -रम् बृ २,४,१४[i]; ४,५,१५[c]; शां१,३,५; -रयोः पै२,३२; ब्रसू २,४,२१; -रस्मिन् प्र १, १२; शां १,३,४; -रस्य इ १३ : ५; सांसू ३, ५; ८;२७; ब्रसू ४,१, १४; -रस्याः बृ ६,४,१९; सांसू ३,४२; -रा बृ१,४,४[i]; सुबा२[३]; -राणि तै १, ११, २; ३; ऐ ५, ३[२]; बृ १,३,२८; मै ४,३; पिंप्र ६,४; -रात् सांसू ३, ४५; ८४; -रान् प्र ३,४; छां १, २,९; ५, १,१२; शौ ५१ : ५; -राम् अघि १०; -राय या २,१; पै ४, ५; -रे प्र १,१२;२,४;बृ ४,४,१४; श्वे ३,१०; प्र ३,३; ते १,४५; नाप ३,८३; अन्न ४,३६; पाशु २,३३; पञ्च३,७; रुद्व ४९; -रेण क २,२,५; मुद्र २; अन्न ५,९७; -रेभ्यः व्रवि ४८; शि ४, ४५; -रेषाम् क २,२,१२;१३; श्वे ६, १२; प्र ३, ८; अशि ५, १७; त्रिब्रा २,६७; पञ्च ३,११; गोपू १९; २०; वट्ठ ३१३ : २; स ३७८:१३; गु ४४; -रेषु भव१, ३६; -रौ वा ६; ब्रसू १,२,२२.

इतर-कला-कलन- -नम् अन्न १,१९.

इतर-त्र शां १,७,३७; योसू १, ४; ब्रसू ३,३,३९.

इतर-था जा ४; शु ३,११; नाप ३, ७७; पप ४१८ : ४; या १,१; सांसू ५,४.

इतर-परामर्श- -र्शात् ब्रसू१,३,१८.

इतर-लक्षण-शू(न्य>)न्या- -न्या ससा १,४०.

इतर-लाभ- -भे सांसू ४,२२.

इतर-वत् ब्रसू ३,३,१६;३७.

इतर-वियोग-

इतरवियोग-वत् सांसू ५,८२.

इतर-व्यपदेश- -शात् ब्रसू २,१, २१.

इतर-शास्त्र-प्रवृत्ति- -त्तिः नाप ५, १; १संन्या २,५९.

इतर-हान- -नेन सांसू ३,४५.

इतरा(र-अ)धिकार- -रात् ब्रसू २,३,२१.

इतरे(र-इ)तर-प्रत्यय-

इतरेतरप्रत्यय-त्व- -त्वात् ब्रसू २,२,१९.

इतरे(र-इ)तरा(र-अ)ध्यास- -सात् योसू ३,१७.

२इत(र>)रा[l m]-

ऐतरेय[l]- -यः छां ३,१६,७; -यम् मु १,१,३०.

ऐतरेय-कौषीतकि-नादविन्द्वा-(न्दु-आ)त्मप्रबोध-निर्वाण-मुद्ग-ला(ल-अ)क्षमालिका-त्रिपुरा-सौभाग्य-बह्वृच- -चानाम् मु १, २,१.

इतस्, १इति,२[०]इति इदम्- द्र.

इतिहास[c]- -सः बृ २, ४, १०;४,१, २; ५, ११; मैत्रि ६, ३२; ३३; इ १० : १; १२; ११ : ९;१८ : १९; -सम् इ १० : ३;६;७;९; १०; -साः स्व ६० : ४; -से जाद २, १२.

इतिहास-पुराण- -णः छां ७,१,४; -णम् छां ३, ४, १;२; ७,१,२; २, १; ७, १; २प्र ३३ : ४; -णानाम् अशि ७,५; पै ४,२३; राउ ५,४; महा ६,८३; ता ३, ९; च २१ : ११; २शिसं २७.

इतिहासपुराणा(ण-आ)ख्य- -ख्यम् सी २९.

इत्थम्, इत्था इदम्- द्र.

इत्या- √इ द्र.

इदम्[n]-

३अ,आ- अस्मात् के १, २; २,५; क १,२,१४; मुं २,१,९; तै २,

a) 'इडया' इति अब्या. । b) 'इडायाः' इति अब्या. । c) व्यु. वैप१ यद्र. । d) 'इति' इति निसा. । e) ऋ ८,६,३० । f) मा ११,४ । g) ऋ १,१६४,३९ । h) कौ ३,१,९ । i) मा १६,४ । j) ऋ १०,१२१,३ । k) ऋ १०,१८,१ । l) स्वमोर् अदडादेशः (पा ७,१,२५) । m) व्यु.? । n) अस्य च पाप्र. अन्वेतदादेशभूताना-मवान्तराणां सतां प्राति. च व्यु. वैप१ यद्र. ।

८,१²;५; ३,१०,५; ऐ ४,६; बृ १,३,९; ३,२,११;८,१२; मना २,१२, १§ª; अस्मिन् प्र ३,१; ३;४,१; ऐ २,१; छां १,९,३; ४; ८, ९, १²;२²; बृ १,३,१८; ५,१७; २, १, १०; १२; श्वे १, ६;५,३; गर्भ १²; कौ ३, २²; ३²; मै ५,३; मैत्रे १,२²; मना २, १२, २§ᵇ; शु ३, ३; अस्मै ते १,५,३; छां १,३,७;१२; बृ १,२,१; कौ २,१; ६²;शा२४§ᶜ; इ १०:३; व ४४७ : ४§ᵈ; कश्रु १, १; अस्य ई ५; के २, १²; क १, १, १५;२२;२,७;२०§ᵉ; प्र ३, ११; मुं २, १, ४; २८; मां १०; ऐ ४, १; ४²; छां १, ८,७; श्वे ३, २०§ᶠ; मे २,४; ४,३; अस्याः छां ४,१७,८; बृ १,३,९; ४,१,५; मै ५,६; मैत्रि ६, ६; कौ ३,५§ᵍ; योचू ३३; यो २,१ᶠ; महा ४, ११४;११५; अन्न १, १०; अन्न ४, ५५; अस्याम् ऐ २,५; छां ३,१२,२; बृ २,५,१;८; मन्त्रि ८; अन्न २, १४; सार २५५:१२; गु ५; चू ८; गी २, ७२; अस्यै बृ २,५, १;८; आभिः क १, १, २५; क्षु २५; वा२०; पिंन्न ६,११; आभ्यः छां ८,६,२; आभ्याम् रापू ३,१; आसाम् प्र ६,५; छां ४,१७,८; ६,१२,१;बृ १,३,१०²;२,५,२; मना २,४०§ᵍ; रापू १,८ʰ; महा ५,२६; सार २५०:४; तारा ८३: ९; आसु प्र ३,६; छां ८,६,२; ३; बृ २,५,२;६; महा ५,४२; एभिः छां १,४,२;११,२; बृ १, ३,२२; शां १, ७,३६; महा ६, ४१; योशि १,११; अन्न ४,८४; १योत १३; रुद्र २४; गु ८२; गी ७, १३; १८,४०; एभ्यः ऐ ३,१; छां १, २, १३; ९, १;३; ११,३; बृ १,४,१६; कौ ३,९; २प्र ३६ : १०; गी ३, १२; एषाम् के ३,२; प्र २,१; ऐ ४, ३; छां १,१,२;४,१७,८; बृ १, ४,१०;५,२२; ३,१,१;६,४,१; श्वे १, २; कुं १४; नि ३; नृउ ७,१२ᶦ; एषु बृ १,३,१; ३,९, ८;५,१४,१; रापू ४, ३४ʲ.

२अन,ना- -नया बृ २, ४, १; ४, ५,२; नाप ५,२४; योचू ३४²; मुद्ग १,४-६; महा ३,५; -नयोः योशि ४,११; गी २,१६; -नेन के ४, ५; ऐ शां²; छां १, २, १;३,१६,७; बृ १,२,७;३,१७; ४,७;५, १७; जा ४; आरु ३; मै २,९; बृजा ३,२०; त्रिता १, ५३; काला ७.

अयम्* -यम् के ३, १²; क १, १, १६;२०; मुं २,२,१०;३,२,३; मां २²;८; तै १,५, १;२,१,१²; ऐ २,२²; छां १, २,७; ३, २²; बृ १, २, ७; जा ५; पहं १⁴; कौ १,३².

इतस्(>:) ई २; छां १, १०, २; ऐ ४,४; बृ १, ३, २४; ५,१७; अद्वै ९; आर्षे ७ : ३; छाग २५: १;२; बा ५; सार २४३ : २२; २५९ : ११; कश्रु २,२.

१इतिं ई १०;१३; के १,३; क १, १,४§ᵏ; प्र १,१; मुं १, १,३; मां ८; तै १,२,१; ऐ १, १;३; छां १,१,१²; बृ ३,९,२८; त्रिता १,५८ˡ.

२°इतिᵐ

इत्या(ति-आ)दि- -दि त्रिता २, १;२६;२८;३०;३३; सौ १,२; -दिना त्रिता १,३५;५४;२,११; १२;१४;२७; -दिभिः बृजा २, ११; ७, ८; भ २,२; -दौ महा ४,५४.

इत्यादि-कल्पना- -नाम् ध्या ९३,१२.

इत्यादि-कृता(त-अ)भि-(ध>)धा- -धा महा ५,१००.

इत्यादि-चेष्टन- -नम् त्रिब्रा २,८४.

इत्यादि-द्वा-त्रिंशद(त्-अ)-क्ष(र>)री- -रीम् त्रिता १,३७.

इत्यादि-नाना-पु(र>)री- -री राधा ४,७.

इत्यादि-नाना-सखी- -ख्यः सार २८२ : १२.

इत्यादि-पञ्च-ब्रह्म-मन्त्र- -न्त्रैः भ १,५.

इत्यादि-प्रकार- -रेण सी१४.

इत्यादि-मन्त्र- -न्त्रेण बृजा ३,२६.

इत्यादि-महा-वाक्या-(क्य-अ)र्था(र्थ-अ)नुभव-ज्ञान- -नात् नि ५३.

इत्यादि-वाक्य-विचार- -रः म ४८:९; १५;४९:४;११.

इत्यादि-वाचक-वाच्य- -च्यः त्रिवि १,११.

इत्यादि-वाच्य- -च्यम् नि१४

इत्यादि-व्यवहार- -रः १अव १८.

a) तैब्रा १०,१०,१। b) ऋ ४,५८,२। c) विध २९, १०। d) ऋ १, ९१, २०। e) एकतरत्र 'अस्माः' इति निसा. सुपा. यनि. सु-शोधः। f) 'अस्य' इति अब्या.। g) ऋ ४,५८,५। h) तु. सस्थ. टि°। i) 'एषा' इति निसा.। j) 'एषः' इति आन. अब्या. च। k) तैब्रा ३,११,८,१। l) 'एवम्' इति अब्या.। m) यनि. एकाऽनकपूर्वपदयुक्तमिति कृत्वैव नापू. पृथक्कृतं द्र.।

इत्यादि-स्थान- -नेषु बृजा ४,२९.

इत्याद्य(दि-अ)न(न्-अ)-न्ता(न्त-आ)कार- -रेण त्रिवि ७,५०.

इत्याद्यु(दि-उ)पनिषत्-का-रण- -णात् रु ११.

इत्या(ति-आ)दि(क>)का- -का महा ४,४५.

इत्या(ति-आ)द्य,द्या- -द्याः सौ १, ११[a]; -द्यान् शि ६,२०८;७,८०.

इत्ये(ति-ए)वमा(म्-आ)दि- -दिम् २प्र ३६ : १७;२०; २२; ३७ : १.

इत्ये(ति-ए)वमा(म्-आ)दिक- -कम् शि ४,६०.

इत्ये(ति-ए)वमा(म्-आ)द्य- -द्यान् शि ६,६१.

इत्थम् छां ५,१०,१;७,५,२; बृ १, ३,८; बृजा २,९; नृउ ९,९; ससा १,४२; त्रिब्रा २,११९; वरा ५,६; सी ३२; अध्या ३३; महा ५,६९.

इत्थं-विद्- -वित् कौ १,३§[b];५.

इत्थं-भूत-मति- -तिः अद्वि १४.

इत्था क १,२,२५; आर्षे ९:४; बा २; ६;७; ११; १८; छाग २३: ५[c]; शौ ५२:२१; इत्था-इत्था आर्षे ७:११;२१.

इदम्* -दम् ई शां[2]; के १,४[2]; ५[2]; क १,१,२९; प्र २, १३; मुं १,१,३; मां १;११; तै १, ७,१; ऐ १,१; छां ५,२,१;२४, १; बृ शां[2]; १,२,१;५.

इदं-रूप- -पः बृ १,४,७[2].

इदं-द्र- -द्रः ऐ ३,१४[2]; -द्रम् ऐ ३,१४.

इदं-पारा(र-अ)यण—वश- -शात् पारा १०.

इदं-भाव- -वः अध्या ४५.

इदं-मय- -यः बृ ४,४,५.

इदानीम् बृ ५,१४,४; मैत्रि ७,८; बृजा ६,५; शु १,३; त्रिब्रा २४; मं २,४,४; महा २,३६; पप ४१७ : २; यो १, १९; मु १, १,५.

इम,मा- -मम् क १,३,१७;२, १,५; प्र ६,१[2]; मुं १,२,१०; छां १,३,२[2];५,११,२; बृ १, २,५; ३,७; मना १,१३§[d]; २, ३९§[e]; कौ २,९; ते १,३८; नाप ३,४२;४७; -माः क १,१, २५; २,२,१५; प्र १,३;१४; २,७; मुं २,२,१०; तै १,३, ४; छां ४,२,५;४,५; बृ १,३, १५; ५,२०; मै ५,२;७; मैत्रि ६,२; मना १,१४!§[f]; सुबा ६; -मान् तै ३,१०,५; ऐ १,२; छां १,१०,४; बृ ५,४,१;१४, ६; मै ५,७; मैत्रि ६,७; मना १,१०§[g]; २प्र ३३ : १९; शौ ५३ : २०; वद्ध ३१७ : २; गार ४०५ : २१; गा १९; गी १०, १६; १८,१७; -मानि तै ३,१, १;२,१; ऐ ५,३[2]; छां १,९,१; ११,५;७;९;२,९,२;बृ २,४,६; ४,५,७; मै २,९[2];५,७; मैत्रि ६, ७; सू ७; त्रिता ५,२१; -माम् के १,१; क १,१,१६;१७; छां ३, ११,६; बृ ६,४,९; मैत्रे १,१; त्रवि २८; नाप ६,२९; महा ५, २१; योशि ३,१०; त्रिता १, ७२; यो २,२;२२; -मे मुं २,१, ८; ऐ १,३;३,१;४,३; छां १, ७,६; बृ १,२,७; ६,१,४;७; श्वे ४,८§[h]; मना १,२§[i]; २, १२,१§[j]; बृजा ६,१२§[h];राउ ५, २९§[h]; -मौ छां ८,८,३; बृ २, २,४[3]; वरा ४,४२; गी १५,१६.

इयत्-

इयदा(त्-आ)मनन- -नात् त्रसू ३,३,३४.

इयम्* -यम् क १,१,२०; तै २, ८,१; छां १,१,९; ६,१[2]; बृ १,४,४; मै २,३; शु १,१५; योचू ५५; ७०; शां १,७,१५; महा ३,८; अन्न ४,६६.

इह ई २; के २,५[2]; क १,१,१६; मुं १,१,७; ऐ ३,१३; छां १,१२,३; ५[2]; बृ १,२,१; मना १,१०§[k]; कौ १,२[2]; बृजा २,९.

ऐहिक- -कम् रार ४,११; त्रसू ३,४,५१; -केषु रार ४,१०.

ऐहिका(क-आ)मुष्मिक- -कम् व ४६५ : १३.

ऐहिकामुष्मिक-त्रा-त-सिद्धि- -द्ध्यै १अव ९.

ऐहिकामुष्मिक-सु-ख-श्रम- -मस् पप ४१८ : २.

ऐहिकामुष्मिका-(क-अ)पेक्ष- -क्षः नाप ५,१.

इह-कार[11]- -रः छां १,१३,१.

इह-लोक-

ऐहलौकिक- -कम् राउ ५, ११.

इहा(ह-अ)मुत्र-विवर्जित- -तः ते ४,७२.

a) इत्या° इति निसा. मुपा. यनि. सु-शोधः (तु. अध्या.)। b) °विध् इति अध्या.। c) 'इच्छा' इति मुपा. यनि. सु-शोधः (तु. वे.)। d) ऋ १०,७५,५। e) तैआ १०,५०,१। f) निसा. च सा. (तैआ १०,१,१४) संमतश्च 'इमान्' इति पाभे. यनि. सु-शोधः (तु. सस्थ. टि. अपि, आ, रजस्व(स्-व)->-स्वम्)। g) तैआ १०, १,१०। h) ऋ १,१६४,३९। i) तैआ १०,१,२। j) तैआ १०,१०,१। k) खि ५,८७,९।

इंदश्- -दक् छाग २५:९; गी ११,४९.

इंद(श्>)क्-चेष्ट- -ष्टः नाप ५,५.

इंदश- -शः बृ ३,५,१; मै २,३; मैत्रि २,३; बृजा ६,७; महा ३, ३; -शम् महा २, १८; योशि १,२४; ४९; अन्न १,२; मु २, २, ७२; गी २, ३२; ६, ४२; -शस्य मै २,५; -शाः क १, १, २५; छां ४, १४, २; -शे योशि १,७३; -शेन मै २, ४; मैत्रि २, ४[a]; ५.

इंदशी- -शी महा ५,१११.

इंदशो(श-ई)श्वर-सिद्धि- -द्धिः सांसू ३,५७.

√इध्,>न्ध्,ऐधीत्[b] बा १५.

इद्ध,द्धा- -द्धः मैत्रि ७,७; -द्धम् चू १; -द्धया महा ४,१६;५,११२; ६,७८[c].

इध्म- -ध्मः बृ ६,२,१३; -ध्मम् मना २,८०§[d]; मुद्ग २.

इन्ध[e]- -न्धः बृ ४,२,२§[f]; -न्धम् बृ ४,२,२§[f]; मैत्रि ६,३५.

इन्धन- -नम् महा ३, ४४; या २, १०; शि ६, २८३; -नानाम् शि ४,६२.

इन्धन-योनि-गृह्य- -ह्यः श्वे १,१३.

इन्धान- -नः मना २,५०§[g].

एधस्- -धांसि गी ४,३७.

इन[e]- -नान् रापू ४,५२; -नेन वउ३,७.

√इन्द्

इ(न्दि>)न्दी-

इन्दी-वर[e]-

इन्दीवर-दल-प्र(ख्य>)-ख्या- -ख्या शां ३,१.

इन्दु[e]- -न्दवः महा ४,१७; -न्दुः मना १,१५§[h]; मै ५,८; मैत्रि६, ८; ध्या ८८; योचू६२; गोपू२५; योशि १,१३३; वउ२,१; -न्दुम् २शिसं १६; -न्दोः यो २, २०; त्रि ४; व ४२७:१२.

ऐन्दव- -वेन त्रिता ३,१९.

इन्दु-खण्ड- -ण्डम् पी४२१:८.

इन्दुखण्डा(ण्ड-अ)न्त-मौलि- -लिम् व ४२६:१२.

इन्दुखण्डा(ण्ड-अ)व-ब(द्ध>)द्धा- -द्धाम् व४२७:१.

इन्दु-मण्डल- -ले अन्न ४,९.

इन्द्वी(न्दु-ई)श-धात्र(तृ-अ)-नन्त- -न्ताः रापू ४,३८.

इन्द्र[e]- -०न्द्र बृ ६, ४, २३; मना १,११§[i];२,२§[j]; कौ २,११§[k]; वद्व ३१६:१४§[l]; व ४३८:२२; ४६१:१८§[j];४६३:२२§[m]; वपू १,४§[n]; -न्द्रः के४,२;३;क२,३, ३; प्र शां[२]§°;२,९;मुं मां शां[२]§°; तै शां[२]; १,१,१;४,१;१२,१;२, ८,१; ऐ ३,१४§[f]; छां८,७,२; ९,१; बृ १,४,११;५,१२;२,१, ६;२,२; ५,१९; ३,३,२; ९,२; ६[२]; ४,२,२; गौ ३, २४; अशि शां[२]§°; २,३; अ शां[२]§°; के १, ८§[p];ना१; मना१,९[२]§[q];१०§[r]; १२§[s]; २,८§[t]; १२, ३§[u];१३, २§[p]; २, ४२§[v];४४§[w];५५§[x]; ६८§[y]; मै ४,४,१२;५,८; मैत्रि ५,१; ६,८;३३; ७,२;११; कौ ३,१[४];२;४,७;२०; नृपू शां[२]§°; १,८§[p];२,१४;१७§[z];योचू७२; बृजा शां[२]§°; ४,२२; नि५;२०; नाप शां[२]§°; ४, ३८[२]§[a']; त्रिवि शां[२]§°; २,१६; शां शां[२]§°; ३, १; त्रि ८; अव्य ५[२];६; ए १२; अध्या २०; पाशु शां[२]§°;१,११; २९; दे शां[२]§°;९;भ शां[२]§°;१, ९;२,१०§[b']; २७; ग गोपू सी श रार रापू पप अन्न सू १आ पत्र त्रिता भा मव ह दत्ता अवि पहं शां[२]§°;कृ शां[२]§°;८;गरु शां[२]§°; १;२प्र३४:१४;बा १;४;१०;शौ ५१:१;५;१६; ५२ : ११;१२; ५३ : ३;४;६; २१; सूता १,५; नापू ३,६§[p]; कृपु८; सार २७२: १४; वद्व ३१३:६; सि शां§°; हे ७; अक्षार[९]; कालि ४०३:७§[p]; गार ४०५:१८;१९; रा ४२३: १§°; व ४३८:२१;२२;४४४: २; ४६०:१§[c']; २१§[d']; ४६४: २§[x]; ४६५ : २; अरु २§[e']; ४§[f']; ५§[g']; पिंब्र शां[२]§°; वपू१, २[h']; २,३; वउ२,१;२६;३,४१; ४,१७; -न्द्रम् के३,११; छां २, २२,३; मना१,९§[i']; २,७३§[j']; सुबा ९[२]; अव्य ६; आर्षे ९:१७;

a) '-श्येन' इति मुपा. यनि. सु-शोधः (तु. नाउ.)। b) लुङि प्रपु१ (तु. बाटी.)। c) 'इच्छया' इति निसा. संटि., अच्या.। d) तैआ १०,६४,१। e) इन्ध- इत्येवं प्राति. मौलिकतया यनि. सु-शोधम्। f) तैब्रा १,२, १,१५। g) व्यु. वैप१ यद्र.। h) ऋ ९,९७,४०। i) ऋ ३,४७,२। j) तैआ १०,१,१६। k) ऋ २,२१,६। l) ऋ ७,३२,२२। m) ऋ ८,६१,१३। n) ऋ ८,८१,१। o) ऋ १,८९,६। p) तैआ १०,११,२। q) ऋ १, ८९,६; १०, १५२,२। r) तैआ १०,१,१०। s) तैआ १०,१,१२। t) तैआ १०, ६, १। u) ऋ ४,५८,४। v) तैआ १०,४२,१। w) तैसं ३,३,१,२। x) ऋ १०,१५२,२। y) तैआ १०,३१,१। z) ऋ १, ४०, ५। a') तैआ ७,४,१। b') तैआ ८,८,१। c') ऋ १०,८३,२। d') ऋ १०,८४,५। e') ऋ १०,१५७,१। f') ऋ १०,१५७,२। g') १०,१५७,३। h') पूप. संधिरार्षः। i') ऋ १०,८९,५। j') ऋ १०,७३,११।

वा २०§[a]; शौ ५२ : २; §[b]व ४३९:४;४४४:९; ४४९:१८; ४५३ : ६; अरु ३२§[c]; -न्द्रस्य तै २,८,३;४; छां २, २२,१;३; बृ ६,४,२३; मैत्रि ७,९; मना १, ४§[d]; आरु ३§[e]; नाद १५; नाप ४,३८§[c]; पप ४१८:३१; भ २, ५; गरु ९; १२[२]-२३[२]; २४; व ४५५:२२; सांसू ४,१८; -न्द्राय मैत्रि ६,३३; त्रिवि ७,४७; मना १, १२§[f]; २, ६७§[g]; मुद्ग २[२]; गोउ ६६; गरु १; आर्षे ९:२१; व ४६५:२; -न्द्रे छां २,२२,५; सुबा ५; -न्द्रेण छां ३, ७,१;३; बृ ६,४,२२.

इन्द्राणी- -०णि व ४३१ : १६;१८; ४४९ : १५; ४५८ : ११; सुसु १४; -ण्यै व ४३१:६.

इन्द्राणी-शक्ति- -क्तिः आथ ३९४ : ७.

ऐन्द्र- -न्द्रम् शि ५, ३५; ७,८२.

ऐन्द्री- -न्द्री नाद १०; व ४५८ : ५; -न्द्रीम् शि ५, ३५.

ऐन्द्र-पञ्चम- -मम् शि ५,३१.

इन्द्र-गोप[२]- -पः बृ २,३,६.

इन्द्रगोप-वर्ण- -र्णम् ध्या ९३,१३![h].

इन्द्रगोप-सम-प्रभ- -भः मना ३७[i].

इन्द्र-जाल[१२]- -लम् मै ४, २[j]; मैत्रि ४,२; -लेन महा ४,१२९.

इन्द्रजाल-वत् मैत्रि ७,१०.

इन्द्रजाल-श्री- -श्रीः महा ४,४७;४९.

इन्द्र-दण्ड[१२]- -०ण्ड व ४३५ : १०.

इन्द्र-द्युम्न[१]- -म्नः छां ५, ११,१; -म्नम् छां ५, १४,१.

इन्द्र-नगर[४]- -रम् २प्र ३३ : १८§[k].

इन्द्र-नाग-

इन्द्रनाग-भुजगे(ग-इ)न्द्रा-(न्द्र—आ)धार- -रम् अव्य ६.

इन्द्र-नील[१२]-

ऐन्द्रनील- -लम् सिशि ३८२ : १८.

इन्द्रनील-निभ- -भम् शां ३,१.

इन्द्रनील-प्रदान- -नेन शि ६,९८.

इन्द्रनील-वर्णा(र्ण-आभ>)-भा- -भा तारा ८३ : १६.

इन्द्र-पराजय-महो(हा-उ)त्स-व- -वे सार २५६ : ७.

इन्द्र-प्रजापति- -ती कौ १,३;५.

इन्द्र-मण्डल- -लम् व ४३८ : २२;२३.

इन्द्र-मुख्य- -ख्याः श १.

इन्द्र-योनि- -निः तै १,६,१.

इन्द्र-रूप-

इन्द्ररूपिन्- -पिणम् योशि ५,५३.

इन्द्र-लोक[२]- -कम् कौ १, ३; -काः बृ ३,६,१; -के सार २४२ : १४; -केषु बृ ३,६,१.

इन्द्रलोक-ज्ञान- -नम् शां १,७,५२.

इन्द्र-वज्र- -ज्रः लु १३[l].

इन्द्र-सेना- -ना नृपू ३,४; वपू २,२.

इन्द्रा(न्द्र-अक्ष>)क्षी- -०क्षि व ४४९ : ७.

इन्द्रा(न्द्रा-अ)ग्नि- -ग्नी दे १§[m]; भ २,२९; गार ४०८ : ८.

ऐन्द्राग्न- -ग्नम् गार ४०७:७.

इन्द्रा(द्र-अ)ग्नि-यम-निर्ऋति-व-रुण-वायु-कुबेरे(र-ई)शान- -नान् सुमु १०.

इन्द्रा(न्द्र-आ)दि- -दयः मं २, ५,४; पाशु १,१०; सूता ५,१२; वि १२; -दिभिः रार ३,१; स्मै १, ३.

इन्द्रादि-पद-योग- -गः सांसू ५,८३.

इन्द्राद्या(दि-आ)वरण- -णम् रार ३,१.

इ(न्द्र>)न्द्रा-वत्- -वतः व ४३७,१२§[n].

इन्द्रिय[०]- -यम् प्र ६,४; छां ३, १,३;२-५,२; बृ ६,४,५;६; मना २,४४§[p]; ते ३,४४![q];४,७;६, ३२![r]; मु २, २,२२; वउ ३, ८; सांसू १,६१;२,२३; सांका २७; -यस्य सांसू १,१०८; गी ३,३४[२]; -याणाम् क २,३,६; मैत्रि ६,२५; पहं ४; नाप ३,३६;४५; शां १, ८; शारी १; पाशु २,१३; जाद ७, १; वरा २, ८०; नाउ ३,३; भव ५,८;९; सांसू २, २९; ५, ८४; १०४; योसू २, ५४; ५५; गी २,८;६७; १०, २२; -याणि के शां[२]; क १,३,४-६; छां शां[२];

a) ऋ १०,७३,११ । b) ऋ १,७,१० । c) तैआ १,२७,५ । d) मा ३२,१३ । e) आपमं २,९,५ । f) तैआ १०,१,१२ । g) तैआआ १०,६७ । h) °कोप° इति मुपा. यनि. सु-शोधः । i) °पकसंनिभः इति आन., °कोप° इति अव्या. । j) '-लः' इति अव्या. । k) ऐन्द्र° इति गोत्रा १,१,२३ । l) '-ज्रम्' इति आन. । m) ऋ १०,१२५,१ । n) ऋ १०, १०१, १ । o) व्यु. वैप१ यद्र. । p) तैसं ३,३,१,२ । q) '-यः' इति मुपा. यनि. सु-शोधः । r) '-र्यैः' इति मुपा. यनि. सु-शोधः (तु. अव्या.) ।

श्वे २,८; मै शां[2]; मैत्रि ६,२१; ३१; मैत्रे आरु शां[2]; अ ३; कौ २,१५; नृपू १,८; नृउ ९,८; सुबा २; १४[2]; ससा १,४२; ते ५,८०; १योत ६८; नाप ३, २६; ७४; ४,१; मुद्ग २; पै ४, २; महा शां[2]; १,१; ५,१२६; योचू वा १संन्या अव्य कुं सावि रुजा शां[2]; योशि १,३९;१६४; ३,१२; जाद शां[2]; ८,९; १०, ४; जाबा शां[2]; २प्र ३२: ११; १४;३३:१;४;८; सार २४० : ४;२८३:६; शि १,११; गु ३२; भव २,११;२२;२७;३,२५;४, १८; कक्षु ३,७; ब्रसू २,४,१७; गी २,५८;६०;६१; ६८; ३,७; ४०-४२; ४,२६; ५,९; १३, ५;१५,७; -याय मना २,८§[a]; -येण वृ ६,४,७;८;१०;११; -येभ्यः क १,३,१०;२,३,७; सार २४३:९; गु ४१; भव २, २०; गी ३,४२; -येषु सुबा २; सांसू २,३९; -यैः प्र ३,९; कौ २,१५; योचू ८४; अन्न ५,३९; योशि १,२७;गी २,६४;५,११.

इन्द्रिय-कर्मन्- -र्माणि मैत्रि ६,१०; गी ४,२७.

इन्द्रिय-कृत- -ताः अना ७; -तान् जा २[2]; राउ ३,१.

इन्द्रिय-गण- -०णाः अन्न ३,८.

इन्द्रिय-गो-चर- -राः गी १३,५.

इन्द्रिय-ग्राम- -मम् त्रिब्रा २,१४७; गी ६,२४;१२,४.

इन्द्रियग्राम-संयम- -मः ते १,१७.

इन्द्रिय-घात- -तात् सांका ७

इन्द्रिय-जय- -यः योसू ३,४८.

इन्द्रिय-तन्मात्र-जाल- -लम् अन्न ३,१५[b].

इन्द्रिय-ता- -ताम् महा ५,१२६.

इन्द्रिय-त्व- -त्वात् सांसू ५,६९.

इन्द्रिय-धारणा- -णाम् क २,३,११.

इन्द्रिय-निग्रह- -हः मैत्रे २, २; नाप ३,२४; स्क ११; भव ५,१२.

इन्द्रिय-पालक- -कान् पै १,२५.

इन्द्रिय-प्रवृत्ति- -त्तेः अता ९.

इन्द्रिय-प्राण- -णौ वरा ३, १२?[c].

इन्द्रिय-बल- -ले मैत्रि ६, २५.

इन्द्रिय-वध- -धाः सांका ४९.

इन्द्रिय-वृत्ति- -त्तिः सांसू २,३२.

इन्द्रिय-शक्ति-
इन्द्रियशक्ति-तस्(>:) सांसू ५,११३.

इन्द्रिय-शुद्धि-प्रेमन्- -म्णा सार २८६ : ११.

इन्द्रिय-संयम- -मः शि ५,४४.

इन्द्रिय-संघात- -तैः पै २,४५.

इन्द्रिया(य-आ)क्रान्ति- -न्तेः महा ५,७९.

इन्द्रिया(य-अ)ग्नि- -ग्निषु गी ४,२६.

इन्द्रिया(य-आ)त्मन्- -त्मा सुबा ५; गोउ ६४.

इन्द्रिया(य-आ)दि- -दिः शु ३,१०.

इन्द्रियादि-भाव-
इन्द्रियादिभाव-मय- -याः सार २३७:२१.

इन्द्रिया(य-आ)दिक- -कम् ते ६,५५.

इन्द्रिया(य-अ)न्त- -न्तम् मं १,३,१; अता १०.

इन्द्रिया(य-अ)न्तर- -रे गौ २,१५.

इन्द्रिया(य-अ-)भाव-रूप- -पः ते ३,३६.

इन्द्रिया(य-आ)राम- -मः गी ३,१६.

इन्द्रिया(य-अ)रि- -रयः महा ५,७६; -रीन् महा ५,८४; ६,२१.

इन्द्रिया(य-अ)र्थ- -र्थान् मैत्रि ६,८;१०;१९; भव २,१७; गी ३,६; -र्थे सार २५७:२; -र्थेभ्यः १योत ६८; मं १,१,७; गी २,५८;६८; -र्थेषु मै ३,५; मैत्रि ३,५; महा ५,२९; वरा ४,५; गी ५,९;६,४;१३,८.

इन्द्रियार्थ-विमूढ- -ढस्य मै ४,४,२; मैत्रि ६,३४; मैत्रे १,४,४.

इन्द्रियार्थ-श्री- -श्रीः महा ५,१७४.

इन्ध-, इन्धन-, इन्धान- √इध् द्र.

इभ[d]-

इभ्य- -भ्यम् छां १,१०,२.

इभ्य-ग्राम- -मे छां १,१०,१.

इम- इदम्- द्र.

*इय°-

√इयाय, इयायते[f] प्र ४,२.

a) तैआ १०,६,१। b) °तादात्म्यम् जालम् इति अव्या.। c) '-णः' इति मुपा. यनि. मु-शोधः।
d) व्यु. वैप१ यद्र.। e) नैप्र. <इर्य- (वैप१ यद्र.)। f) वैतु. आगि. √इ इत्यस्य यङ्वृत्तमिति।

इयत्–, इयम्[a]– इदम्– द्र.
इ(र>)रा[a]– -रा कौ १,५.
इरं-मद–
ऐरंमदीय[b]– -यम् छां ८,५,३.
इरा-वत्–
ऐरावत[a]– -तः महा ४, ६४; -तम् गी १०,२७.
ऐरावत-पुण्डरीक-वामन-कुमुदाञ्जन-पुष्पदन्त-सार्वभौम-सुप्रतीकाक्ष– -क्षाः नापू ६,१४.
ऐरावता(त-आ)रूढ– -ढः व ४३८:२१.
इरिए[c]– -णे इ १३:९.
इलले[c] अल्ला १[१४].
१इ(ल>)ला[d]–
[?]इल्य[e,o]– -ल्यः कौ१,३; -ल्यम् कौ १,५.
२इला[c]– -लाम् अल्ला १[१२];२[६];३[५].
इले(ला-इ)ला अल्ला ३[५].
इलूष[f]–
ऐलूष– -षम् छाग २३ : १.
इव क १,४,८§[g]; श्वे ३,९§[h]; नाप ४, ३८§[i]; महा ३, १९[j]; आर्षे ८: २३[y];९:१.
√इष् (गतौ[k])
इष– इषम् अशि५,७;१९; दे५§[l]; सर२,८§[l]; इषे २प्र३६:१९§[m].
इषित,ता– -तम्, -ताम् के १,१.
एषितव्य[n]– -व्यः गौ ४,१६.
इषीका[a]– -काम् क २,३,१७.
इषीका-तूल– -लम् छां ५, २४,३.

इषु[a,b]– -षवः नी २, ९§[o]; १३§[p]; २२§[q]; -षवे नी १,४; -षुः नी१, ७§[r]; -षुणा मैत्रि६,२८[२]; -षुभिः त्रि १३; गी २,४; -§[s]षुम् श्वे ३, ६; नी १,५.
इषु-कार–
इषुकार-वत् सांसू ४,१४.
इषु-क्षेप-त्रय– -यम् १संन्या२,११
इषु-धि[t]– -धिः नी २,१५§[t].
१इष्ट– √*इच्छ्, इष् द्र.
२इष्ट– √यज् द्र.
इष्टक,का[u]– -काः क १, १,१५; मैत्रि ६, ३३[३]; -कानि शि ५, ७; -§[v]०के मना १,८; व ४६४:८.
ऐष्टक– -कम् कौ २,६§[w]; शि ४,११.
इष्टवत्–,इष्टा-पूर्त–,इष्टा-पूर्ति–,इष्टा-सुकृत–,इष्टि–,इष्ट्वा √यज् द्र.
इह इदम्– द्र.

---

# ई

१ई[x] व ४२९:७;११;१५;२०;४३०: ३; ८.
ई-कार– -रः छां १,१३,१; सी ३; -रम् त्रिता १,२६; ६५.
ईकार-रूप–
ईकाररूपि(न्>)णी– -णी सी ५; ६.
ईकारा(र-अ)क्षर– -रम् त्रिता १,२७.

ईंतस्(>:) गोपू २५.
ईं गरु ६; त्रिवि ७,३६; नृपू ३,४; आथ ३९४:३; व ४२८:१;२[२].
ईं-कार– -०र अन्न ५.
ईंकार-प्रथमा(म-अ)क्षर– -रः व ४५६ : २०.
ईंकार-स्व-रूप– -पम् सुमु५
२ई[y]– ईम् पा ५,३.
√ई, ईयते वृ४,३,१२; सूता१,१४§[z]; श्या २१.
ईयमान– -नः वृ ४,३,१३.
√ईक्ष्, ईक्षते प्र ५,५;शु३,१;नाप६, १९; गी ६,२९;१८,२०; ईक्षन्ति मैत्रि ७,१-६; ईक्षसे पिंत्र ५,८;६,२; ईक्षत[a'] ऐ १,१;३; ३,१;११[३]; ऐक्षत छां ६,२,३[२]; ३,२; वृ १, २, ५; ऐक्षत् क २, १,१; ऐक्षन्त के ३,१; छां ६,२, ४; नृउ ६, १; ईक्षेत महा ४, ८०; वरा २,१८.
ईक्षण–
ईक्षणा(ण-आ)दि-प्रवेशा-(श-अन्त>)न्ता– -न्ता वरा २,५४; महा ४,७३.
ईक्षति– -तेः ब्रसू १,१,५.
ईक्षति-कर्म-व्यपदेश– -शात् ब्रसू १,३,१३.
ईक्षमाण– -णः मै १,१; मैत्रे १,१.
*ईक्षा–
*ईक्षां √कृ, ईक्षाञ्चक्रे प्र ६,३; वृ १,४,२;४;६,४,२.

a) व्यु. वैप१ यद्र. । b) वैतु. शं. (इरा->) ऐर-> -रम् इति च (मद->) मदीय-> -यम् इति च द्वे पदे इति । c) अर्थतोऽसंबद्धं सद् मुहम्मदीय-देवनमस्कारीयशब्दविशेषानुकृतिमात्रं द्र. । d) =इरा । e) प्राति.? (तु. PW. प्रमृ.; वैतु. निसा. ?तिल्य- इति) । f) व्यु.? MW. <√इल् इति । g) ऋ ३, २९, २ । h) तैआ १०,१०,३ । i) तैआ ७,१०,१ । j) 'एव' इति अञ्या. । k) अयमर्थनिर्देश इच्छेतराऽर्थसामान्यस्योपलक्षकः [तु. वैप१, टिटि. √अश् (व्याप्तौ), √अस् (भुवि)] । l) ऋ ८,१००,११ । m) मा १,१ । n) वैतु. MW. <आङ्पूर्वात् प्रधा. इति । o) मा १६,९ । p) मा १६,१० । q) मा १३,७ । r) तैसं ४,५,१,१ । s) मा १६,३ । t) मा १६,१२ । u) व्यु.? (तु. यस्था. वैप१; वैतु. पा ६,३,६५ मूलतो ह्रस्वान्ततामप्रमाणुक इव) । v) मा १३,२१ । w) 'ऐष्टिकम्' इति शांआ ४,६; JC. । x) =वर्णः । y) =लक्ष्मीपर्यायः (तु. पाटी.) । z) तैब्रा ३, १२,९,१ । a') आडभावे लङि रू. द्र. ।

ईक्षितुम् रापू ४,१८.
√ईज्>जि, ईजयेत् वृजा ३,११.
ईजान–, ईज्यान– √यज् द्र.
√ईड्,ळ्, ईट्टे त्रि १६; ईळते व ४६०:२§[a]; ईडे द ३; १०; २प्र ३६:१७; वपू १,४;२,३.
ईड्य– -ड्यः क २, १, ८§[b]; मना २,१§[c]; व्रवि ९३; श १९; गोपू १९; व ४६१:१६§[c]; -ड्यम् क १,१,१७; श्वे ४, ११; ६,५; ७; अशि ५,५; श ३; गी ११, ४४.
ईळित– -तः व ४६०:१९§[d].
ईतस्(>:) १ई द्र.
ईदृश्–, ईदृश– इदम्– द्र.
√ईप्स्, ईप्सित– √आप् द्र.
ईम्° वृ २, ५, १६§[f]; नापू ४,११§[g]; वपू २,२§[h].
ईयमान– √ई द्र.
√ईर्>ईरि, ईरयति छां ७,४,१[२]; ५,१[२].
ईर्यंते शु ३,३; ५;८; ते ५,९२; योशि ३, १५; १अव १; नाउ ३,२२.
ईर–
ईर-ज–
ईरजा(ज-आ)दि– -दीनाम् रापू ४,४९?[i].
ईरित,ता– -तः मैत्रि २, ६; रार २, १९;६०; ते ५,९२; जाद १०, ३; अन्न ५,७७; १संन्या २,८३; शा १५; रापू ४,५७[j]; मुद्ग१,९; -तम् मैर,९;४,५[२]; मैत्रि५,२[२]; ते ५, ९५;९६;१०३; त्रिब्रा २, ४३;१३९; रार २,६१; महा ४, ७;५,७; अन्न ४,१६; पत्र ३,६; यो १,६; रुजा २, १२[k]; वरा १, १२; -ता मुद्ग १,२; गु८३; मु१, १,१७; -ताः वृजा ४,१६; मु१, १,११; -तानि मै३,३;मैत्रि३,३.
ईर्म°– -र्मौ वृ १,२,३.
√ईर्ष्य्
ईर्ष्या– -र्ष्या मै ३,५; मैत्रि ३,५.
√ईश्, ईशते श्वे १,१०;३,१[२];२;५, १; अशि ४,२०; ५,३; नाप ९, ९; शां ३, १; सर ३, १६; वद्ध ३१६:१२; ३१७:२.
ईशे श्वे ४, १३§[l]; ६, १७; मना १,२§[m]; वा १२; २शिसं३३§[l];
ईष्टे छां १,६,८;७,६;९;शां ३, १; ईशते वृ १,४,१०; त्रिता ५, १; व्र २; ईशिषे सूता २, ७§[n];
ईशीमहि आर्षे ७:८.
ईशिष्यसि क १,१,२७.
ईश्– ईशा ई १.
ईशा
ईशा-वास्य–
ईशावास्य-बृहदारण्य-जाबाल-हंस-परमहंस-सुबाल-मन्त्रिका-निरालम्ब-त्रिशिखीब्राह्मण-मण्डलब्राह्मण(ण-अ)द्वय-तारक-पैङ्गल-भिक्षु-तुरीयातीता-(त-अ)ध्यात्म-तारसार-याज्ञवल्क्य-शाट्यायनी-मुक्तिका– -कानाम् मु १,२,२.
ईश– -शः श्वे१,८;५,३; त्रि१४;कै २,१; मना २,७१§[o]; अ३; नाप ९,७; द ८; श २९; पै २,१;४; ३,१;शां३,१; योशि५,५८[२]; कुं १७; करु ३९; जाबा२;९;१३; पा १,४;५; वि १५; शि १,१०; भव २,५; वउ ३, २६;४,२७; ४३; -शम् मुं ३,१,२;३; श्वे ३, ७;२०§[p];४,७; मैत्रि६,१८; त्रि ९; मना २,१२,१§[p]; वृजा ४, १९; शु ३,१९; नाप ९,१३§[p]; श १८§[p]; नाउ १,८§[p]; पा ९, ३§[p]; १०,८; हे११; पिंत्र६,१६; गी ११, १५; ४४; -शाभ्याम् वृजा ४,३०; -शे ते२,४२; -शेन महा ४,७३; वरा २, ५४.
ईशी– -शी गु ६४.
ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरि– -रिः मु १, १, ३०.
ईश-ता–
ईशता-कृत–मति– -तिः शु ३,१०.
ईश-त्व– -त्वम् सर ३,३३.
ईश-दैवत– -ते शि ६, ७५; ७९.
ईश-पार्वती– -तीम् रुद्र २४[q].
ईश-भूत– -तम् वउ ३,४.
ईश-मानिन्– -निनः गोउ ५४.
ईश-संस्थ– -स्थः श्वे ६,१७.
ईशा(श-आ)ज्ञा– -ज्ञया पै २, २४;२७;२९.
ईशा(श-अ)धिष्ठिता(त-आ)वरण-शक्ति–
ईशाधिष्ठितावरणशक्तिः तस्(>:) पै १,११.
ईशा(श-अ)नीश– -शौ श्वे १, ९[r]; नाप ९,८; भव २,३.
ईशा(श-अ)सुरा(र-अ)न्त– -न्तम् पी ४२२:७.

a) ऋ १०,८३,२ । b) ऋ ३,२९,२ । c) ऋ ८,११,१० । d) ऋ १०,८४,४ । e) व्यु. वैप१ द्र. । f) ऋ १,११६,१२ । g) ऋ १०,७१,६ । h) ऋ ६,१७,२ । i) इर° इति निसा. अज्या. च मुपा. यनि. सु-शोधः (तु. आन.) । j) वैतु. नादी. 'ईरिता' इति क्रिप. । k) 'उदाहृतम्' इति अज्या. । l) ऋ १०,१२१,३ । m) तैआ १०, १,२ । n) तैब्रा ३,७,६,२२ । o) तैआ १०,३८,१ । p) तैआ १०,१०,१ । q) '-ती' इति अज्या. । r) 'ईशानीशौ' इति आन., JC. ।

ध्या५५[a]; व्रवि१०;त्रिव्रा२,६८; ७३; योशि ५, २०; २३[२]; २४; २७; जाद ४,५;१८;२२; २३; वरा ५,२३;२५; -डीः वरा ५, १८; -डीनाम् प्र ३,६; त्रिव्रा २, ८९; वरा ५, २०; ४२; ५४; -डीभिः क्षु८[b]; शां१,४; -डीभ्यः छां ८,६,२;-डीभ्याम् शां १,७, ४९; योशि १,९३; यो १,२६; -डीम् क्षु ९; ११; व्रवि ११[c]; पो २३; -डीषु छां ८, ६, २;३; योचू २६; शां १,४[३]; जाद ४, २४; वरा५, ३१; व्रसू ३,२,७; -ड्यः क २,३,१६; मुं २,२,६; छां ८,६,१;६; बृ २,१,१९;४, ३,३;३,२०; व्र १; कौ ४,१९; सुबा ४[३];-११; ध्या ५१; ५५; त्रिव्रा २, ७५; ९९; योचू १५; शां १,३,१२[d];१,४[५d]; योशि५; २०;२६;६,४;१४; भा१४; वरा ५,२८;५४; -ड्याम् सुबा ५[१४].

नाडि-(क>)का- -काः त्रिव्रा२,७५; ११८; -के त्रिव्रा २,७१.

नाडि-गण- -णाः योचू ९८; शां १, ७, १.

नाडि-जाल- -लस्य योचू ६५.

नाडि-मार्ग- -र्गेषु ध्या ९८[e].

नाडि-शत- -तम् क्षु१५;योशि६,५

नाडि-शोधन- -नात् योचू ९९; शां १, ८.

नाडि-संचय- -यम् क्षु १५[f].

नाडी-गति- -तिम् वरा ५,३१.

नाडी-चक्र- -क्रम् योचू ९४; योशि ५,२७; वरा५,२२;-क्रस्य योशि ५,१६; -क्रे शां १,७,९.

नाडी-जला(ल-अ)पह- -हम् योशि १, ९४.

नाडी-जलो(?ल[g])द(?ह[g])र- -रम् यो १,२९.

नाडी-द्वार- -राणि योशि ६, १७; -रेषु ध्या ७०.

नाडी-नामन्- -मानि सुबा ६.

नाडी-पुञ्ज- -ञ्जम् जाद ४, ६१.

नाडी-भेद- -दम् त्रिव्रा २,८८.

नाडी-मध्य- -ध्यम् पै २,४१.

नाडी-मय- -यम् ध्या ५४.

नाडी-महा-चक्र- -क्रम् योचू १८.

नाडी-मार्ग- -र्गेषु शां १,४.

नाडी-शत- -तम् क्षु १९.

नाडी-शुद्धि- -द्धिः १योत ४४[२]; शां १,५; -द्धिम् त्रिव्रा २,५३; जाद ५,१;२;११.

नाडी-संशोधन- -नम् शां १,४.

नाडी-संस्पर्शनो(न-उ)द्यत- -तः अन्न ४,४२.

नाडी-सहस्र- -स्रेषु ध्या ५१;५८; योचू १५.

नाडी-सूत्र-गत- -तेन गर्भ ३?[h].

नाडी-स्थान- -नम् शां १,४.

नाड्या(डी-आ)दि- -दौ व्रवि ७२.

√नाथ्

नाथ- -०थ सार२७८: २; -थः ए २; वरा २,८०[२]; -थम् वरा २, ८०.

नाद- √नद् द्र.

√नाध्

§[i]नाधमान- -नाः मना २,७३; चा २०.

नाधिष्ठान- ५न- द्र.

नाना[j*]- क २, १,१०;११[२]; छां १,१, १०; बृ ४,४,१९[२]; गौ ३,२४; कौ ३,९; नि २२; आबो १; त्रिवि ३,२; योशि १,१५७; अन्न २, ७; अध्या ६३.

नाना-ऋषि-कृत-स्मृति-सिद्धा-(द्ध-अ)न्त- -न्तैः सार २३१ : १४.

नाना-कर्मन्[k]- -र्माणि सार २९०: ३.

नाना-कर्म-व्रतो(त-उ)पवासा-(स-आ)दि- -दिभिः सार २३१: १४.

नाना-कल-शब्द- -ब्दैः सार २६९: १६.

नाना-कल्मष-शोधित- -तम् १संन्या २,९.

नाना-कौतुक-क्रीडा- -डाम् सार २८६: १६.

नाना-कौतुका(क-आ)वि(ष्ट>)ष्टा- -ष्टाः सार २२९ : १३.

नाना-गन्ध- -न्धम् शौ ५१:१६.

नाना(ना-अ)न्न-राग- -गम् सार २६४:१५.

नाना-चान्द्रायण- -णैः राउ ५,२१.

नाना(ना-आ)चार-समार(म्भ>)-म्भा- -म्भाः महा ५,१६२.

नाना-चिह्न-

नानाचिह्नित- -ताः भ २, २७.

नाना-जल-केलि-सुख-संपत्ति- -त्तिः सार २६४ : ८.

नाना(ना-आ)त्म-भेद-हीन- -नः मैत्रे ३,८.

नाना(ना-अ)त्यय- -याः छां ४,१०, ३; -यानाम् छां ६,९,१.

नाना-त्व- -त्वम् गौ ३,१३;४,९१; मै ३,३[२]; मैत्रि ३,३[२]; अन्न २, ४४; सांसू २, २७; सांका २७; -त्वस्य मै ३;३; मैत्रि ३,३.

नाना-दर्शन-सिद्धान्त-विचार- -रैः सार २३१:१५.

नाना-देवत- -ताः स्व ६१:१५.

a) 'भागे' इति निसा. । b) °डिभिः इति अव्या. । c) 'सूर्यम्' इति आन. । d) °डयः इति अव्या. । e) °डी° इति निसा. । f) °ये इति अव्या. । g) पा.? यनि. शोधः । h) °नाडी° इति पा.? यनि. शोधः (द्र. गपू. ११२a)। i) ऋ १०,७३,११ । j) अव्य. । वैप१ यद्र. । k) मलो. कस. ।

नाना-देशिक-वक्त्र-स्थ- -स्थैः शां १,७,३६[a].
नाना-नाडी-प्रसव-ग- -गम् योशि ६,१३.
नाना-नाडी-समावृत- -तम् त्रिब्रा २,६७[b].
नाना-नाद- -दाः योशि १, १२७.
नाना(ना-अ)न्नमय-रस- -सान् सार २७० : १२.
नाना-पर्ण-पुट- -टानाम् शि ६, २६६.
१नाना-पुष्प°- -ष्पैः सार२३४:१२
नानापुष्प-प्रकरण- -णम् शि ७, ३४.
२नाना-पुष्प[d]-
नानापुष्प-वृक्ष- -क्षैः सार २३२ : १५.
नाना-प्रेक्षणक- -कानि शि६,१८६.
नाना-भक्ति-समन्वित- -तम् शि ६,१३६.
नाना-भक्ष्य-भोज्य- -ज्यानि सार २६६ : १५.
नाना-भजन-भाव- -वम् सार २५२ : १८.
नाना-भजन-योग्य- -ग्यानि सार २५४ : १६.
नाना(ना-आ)भरण-पूजा- -जाभिः शि ६,१४८.
नाना(ना-आ)भरण-युक्त- -क्तानि शि ६,१२५.
नाना-भाव- -वात् ब्रसू १,४,११; -वान् गी १८, २१; -वेन सार २२४ : ८;२२९ : २०.
नानाभाव-भेद- -दम् सार २२९ : २०.
नाना-भोग- -गान् सार २२४:४; २३८ : १.
नाना-भोग-रस- -सान् सार २७० : ९.
नाना-मणि- -णयः सार २२४: ९.
नाना-मणि-मुक्ता-ग्रथित-जाम्बूनद-सुवर्ण-खचित- -तः सार २६४ : २२.
नाना-मनो-भाव- -वम् सार २३८ : ५.
१नाना-मार्ग°- -र्गैः १योत ६; योशि १, ३.
२नाना-मा(र्ग[d]>)र्गा- -र्गाः योशि १,१५७.
नाना-सुख- -खाः भ २,२७.
नाना-योग- -गः सांसू १, १५०.
नाना-योनि-शत- -तम् त्रिब्रा २, १७.
नाना-योनि-सहस्र- -स्राणि निरु १,१६.
१नाना-रङ्ग°- -ङ्गाः सार २३७:७; -ङ्गैः सार२७१:१५;२७६:२०.
नानारङ्ग-मय- -यानि सार २७१ : १.
नानारङ्गमय-फल-पुष्प-वृक्षा(क्ष-आ)दि-राजमा(न>)ना- -नाम् सार २४६:३.
नानारङ्ग-रचि(त>)ता- -ता सार २६६:६.
२नाना-रङ्ग[d]- -ङ्गैः सार २६२:१७.
नानारङ्ग-मणि-स्तम्भ-शत-शोभित- -तम् सार २७० : ३.
नाना-रति-सुख- -खम् सार२३८: ३.
नाना-रत्न-प्रवेष्टित- -तम् ध्या २७.
नाना-रमण-स्थान- -नम् सार२४६: ६.
१नाना-रस°- -साः मैत्रि६,२२;सार २६७:६; -सैः सार २३३:१९.
२नाना-रस[d]- -सम् शौ ५१ : १६.
नाना-राग-रङ्ग-भोग- -गाः सार २३७ : २१.
नाना-राग-रञ्जि(त>)ता- -ताः सार २६६ : ११.
१नाना-रूप°- -पाणि मै ३,५; मैत्रि ३,५; योशि १,४४; सार २६९: १५.
नानारूप-धर- -राः भ २,२७.
२नाना-रूप,पा[d]- -पम् शौ ५१: १५; -पा गु ७०; -पान् गु ७०; -पैः सार २३४ : १०.
नाना(ना-अ)र्थ- -र्थे क १,२,१.
नाना(ना-अ)लंकार-सुख-रू(प>)पा- -पाः सार २७०:८.
नाना-लता- -ताभिःसार २७०:४.
नाना-लीला- -लया राधा ३, ७.
१नाना-वर्ण°-
नानावर्ण-धर- -रम् त्रिब्रा २, १५५.
२नाना-वर्ण,र्णा[d]- -र्णम् शौ ५१: १५; -र्णाः वरा ५,२८.
नाना-वर्णा(र्ण-आ)कृति- -तीनि गी ११,५.
नाना-वस्तु-
नानावस्तु-मय- -याः सार २३७ : १९.
नाना-वाद- -दैः सार २३१ : १३.
नाना-विचित्र- -त्राणि सार २७० : १०;१९.
नानाविचित्र-जगत्-निर्माण-सामर्थ्य-बुद्धि-रू(प>)पा- -पा नि १९[e].
नाना-विध,धा- -धः नाद३३; महा ५,१५; -धम् सुमु ८; -धाः गर्भ ४[f]; नाद ३५;निरु१,१७;-धानि श १४; नापू ५,३१; सार२७०: ६;१३; गी ११, ५; -धाम् भ २,३०; -धासु अन्न २,४४; -धैः योशि १, २९;६०; भव १,८;

a) °कसूकैश्च इति निसा. संटि. । b) 'प्राणापानसमायुतः' इति निसा. । c) कस. । d) बस. ।
e) °र्थ्याद्° इति अव्या. । f) 'विविधाः' इति आन., अव्या. ।

सांका ६०.
नानाविध-रत्न(त्री-अ)लंकार-
विराजि(त>)ता- -ता तारा ८३:१८.
नाना-विभव-रूप-
नानाविभवरूपि(न्>)णी-
-णी महा ५,२०.
नाना-विभ्रम-कारिन्- -रिणा महा ३,३४.
नाना-वृक्ष- -क्षाः सार २६९ : १८.
नाना-वेष- -षैः सार २६९ : १९.
नाना-व्यपदेश- -शात् ब्रसू २, ३, ४३.
१नाना-शक्ति[a]-
नानाशक्ति-धर- -रःयोशि १,४१
२नाना-शक्ति[b]- -क्ति(?क्तिः°) अद्वैभा ६.
नाना-शब्द- -ब्दम् शौ ५१ : १६.
नाना-शरीर-भाव- -वम् सार २९१:१०.
नाना-शस्त्र-धारिन्- -रिणः भ २, २७.
नाना-शस्त्र-प्रहरण- -णाः गी १,९.
नाना(ना-आ)श्र(य>)या- -या सांका ६२.
ना(?गा[d])ना(ना-अ)ष्टक-सम-न्वित- -तम् पं ६.
नाना-संसार-जनित- -तान् सार २९० : १९.
नाना-सखी- -खीनाम् सार २२४: ४; -खीभिः सार २६९ : १२.
नाना-संकल्प-कल्पित- -तैः शां १, ७,३६.
नाना-सुख- -खम् सार २३८ : ५; २६९ : १०;२८४ : १.
नाना-सुगन्ध- -न्धान् सार २७०: १४.
नाना-सुगन्ध-रस- -सान् सार २२५ : २२.
नानासुगन्धरस-भेद-(ज्ञ>)-ज्ञा[f]- -ज्ञा सार २६३ : ७.
नाना-सुगन्धा(न्ध-अ)ङ्ग-राग- -गेण सार २४३ : १.
नाना-सुरत-कला- -लाम् सार २३८:४.
नाना-सुरता(त-आ)नन्द-निधि- -धये सार २५१ : १५.
नाना-सृष्टि- -ष्टिम् सार २४५:१९.
नाना(ना-आ)स्तरण- -णैः सार २६६ : १३.
नाना-स्तुति-भेद- -दैः सार २७०: १८.
नाना-स्पर्श- -र्शम् शौ ५१ : १६.
नाना-स्मृत्यु(ति-उ)क्त- -क्तान् सार २३४ : २३.
नाना-स्व-रूप- -पम् वरा ३,१.
नानो(ना-उ)पनिषद्-अभ्यास- -सः शा १५.
?नानायत्नादिशेषान्ते[g] शि ६,१८६.
?नानासत्त्वमयानि[f] सार २५७ : १५.
नान्दन- √नन्द् द्र.
नान्यगामिन्- ५न-* द्र.
?नाप्रसं[h] अद्वै ११.
नाभि[i][j]- -भिः ऐ१,४; मै५,६;मैत्रि ६,६; मना १,२§[j];२,१२,२§[j]; ब्र २; बृजा ४,२५;२६; नृपू २, १८§[k];५,२; त्रिब्रा२,५९; शां१, ४; शारी १; भ १,६; जाद ४ ५; ए ९?[l]; गार४०८:८; -भिम् ऐ२,४;त्रिब्रा २,१३१; आच ९; वा १३; लिं ३१० : ४§[m]; -भेः अना २२[n]; ध्या ५०; ७६; योचू १४; ४९; त्रिब्रा २,६२; १३९; शां १, ४; योशि १, १०८;५, २६; वउ ३,१७;५०; -भौ छां ७, १५, १; कौ ३,९; बृजा ४, १४;२३;२८;२९;५,२; नृउ ३, ९; योचू ५;९; शां १,७, ४९; ५२; योशि ५,२०;३८; भ १, ६; जाद ४,२७;६, २८;२९; ऊ ६४ : ६; वपं ३१२ : २; सिशि ३८१:१३; व ४३६:३; पिंब्र६, ६; -भ्याः ऐ १, ४; -भ्याम् मना २,१३,२§[o]; बृजा ४, २१;३४; ६,१२[p]; नृपू ५,२;८[r]; त्रिता२, ६७; प्रा २,१.
नभ[q]-
नभ्य[q]- -भ्यम् बृ १,५,१५.
नाभि-कन्द- -न्दात् त्रिब्रा २,१४९; जाद४,११; -न्दे ब्रवि२२; त्रिब्रा २, १०९; जाद ७, १२; -न्देषु त्रिब्रा २,११०.
नाभि-कुण्डल-
नाभिकुण्डलिन्-
नाभिकुण्डलि-क्षेत्र[r][a]- -त्रम् म ४९ : १४.
नाभि-चक्र- -क्रम् योशि५,२१;वरा ५,२९[r]; सौ ३,१; योरा ९; -क्रे ब्रवि ६८; शां १,७,५२; योसु ३,३०.
नाभि-दक्षिण- -णे ऊ ६४ : ७.

a) कस. । b) बस. । c) पा.? यनि.शोधः द्र. । d) पा.? यनि.शोधः द्र. (तु.अव्या.) । e) पा.? 'नाना-रत्ना(त्न-आ)दि-भूषा-> -षां ये' इति द्विपदः शोधः द्र. । f) पा.? 'नाना-सत्त्व-> -त्त्वानि मया' इति द्विपदः शोधः द्र. । g) पा.? *ना(न-अ)न्न-रस- [=अन(न्-अ)वरस-] > -सम् इति शोधः द्र. । h) वैप१ यद्र. । i) तैआ १०, १, २ । j) ऋ ४,५८,१ । k) 'नाम' इति कौ ३, १, ९ । l) 'ताभिः' इति निसा. मुपा. यनि. सु-शोधः (तु. अव्या.) । m) ऋ २,४०,१ । n) 'नातिम्' इति आन. । o) तैआ १०, ११, २ । p) 'याभ्याम्' इति निसा. । q) पावा ५, १,२ । r) °भी° इति अव्या. ।

नाभि-दघ्नो(घ्न-उ)दक- -कम् नाप ४,३८.

नाभि-देश- -शम् यो ३,११;-शात् जाद ७, ७; -शे अना ३५; तु ७; नाद ३; योचू २४; योशि १,१७२;५,९; जाद ७,६.

नाभि-पार्श्व- -र्श्वयोः बृजा ४, १८; शां १,३,१०; जाद ३,१०; -र्श्वे त्रिब्रा २,४७.

नाभि-प्रदेश- -शे सिशि ३८१ : १८.

नाभि-मण्डल- -लम् ध्या ४९; त्रिब्रा २,७९; योशि ५,३२; -ले योचू १३.

नाभिमण्डल-संस्थान- -ने त्रिवि ७,७.

नाभिमण्डल-संस्थित- -तः त्रिब्रा २, ६.

नाभि-मध्य- -ध्ये शां १,७, ४३; ४५; जाद ४,२६; ६,२२; २४.

नाभि-मध्यम- -मे ब्रवि २३.

नाभि-रन्ध्र- -न्ध्रात् ब्रवि १६[a].

नाभि-स्थ- -स्थम् व ४५६ : २१.

नाभि-स्थान- -ने ध्या३०;ब्रवि१५.

नाभि-हृदय-कण्ठ-मूर्धन्- -र्धसु पव्र २.

नाभि-हृद-कुहर- -रे सार २६५: ११.

नाभ्या(भि-आ)दि-जान्व(नु-अ)-न्त- -न्तम् वपं ३१२ : ३.

नाभ्या(भि-आ)दि-ब्रह्म-बिल-प्रमाण- -णम् पव्र २.

नाभ्या(भि-आ)दि-ब्रह्म-रन्ध्रा-(न्ध्र-अ)न्त-प्रमाण- -णम् पव्र ३,१०.

नाभ्यु(भि-उ)त्तर- -रे ऊ ६४:८.

नाभ्यू(भि-ऊ)रु- -र्वोः रार २, ११.

नाभ्यू(भि-ऊ)रु-जानु-पाद- -देषु रार २,४३.

नामन्[b]- -म° के ४, ६; क १, १, १; ३; प्र ६, ४; मुं १, १, ९; २, २,१; ऐ ३, १२; १४[2]; छां १,६, ७;७, ५[2]; ३,१५,२[4]; ४, २, ५;४, २[2];४[2];५, २;६,३;५, २,१;६;६,८,१;३;७,१,३;४[3]; ५[2];३,१; २६,१; ८,३,४; १४, १; बृ १,३, ९;४, १;७;५,१७; ६, १; २,१, १७;१९;२, ४;३, २, १२[2]; ४,२,२;३;३, २०;४, ११§[d];६,४,२६[2]; श्वे४,१९§[e]; कौ २, ११[2][f]; २प्र ३३:१८?[g]; -म्भिः बृ १,६,१;२,१,१५; कौ ३,३[2];४,१९; बृजा १,१; अन्न ५,५६; सूता १,३१; -मानि बृ १,६,१[2];३, २,३; कौ १,७;३, ६[h]; जा ३[i]; बृजा १,१; मवा८§[j]; नृष ८४:६; पा ७,५; सार २२१: १२; गु २; भव २,१४; -म्नः छां ७,१,५[3];२, १; मना २,६७§[k]; कौ ४,९[2]?[l];१६[m]; -म्ना क१,१, १६; बृ ३, २, ३; कौ २, ११; रापू ४,३[n]; शां १,७,४२[o]; महा ४,११२; सार२३८:१;२;-म्नाम् कलि२; -म्नि छां७,४,१[2];५,१[2].

नाम-गोत्र- -त्रे इ १६ : १२.

नामगोत्रा(त्र-आ)दि- -दि नाप ४, २.

नाम-ग्रहण- -णात् भव १,५१.

नाम-ग्राहम्[p] शौ ५१ : १२[2].

नाम-जात्या(ति-आ)दि- -दिभिः सर २,७.

नाम-तस्(>:) मैत्रि ६,२३; मं ४, १,५; रापू १,४.

नाम-द्वय- -यम् गुषो ४२० : १०.

नामद्वय-संपुटित- -तम् कालि ४०३ : १४.

नाम-धेय,या- -यम् छां ६,१,४-६; ४,१-४; बृ २,३,६; पव्र २; -या नाद १०§[2][q]; -यानि ऐ ५,२.

नाम-पञ्चक- -कस्य बृजा ६,१.

नाम-पारा(र-अ)यण-

नामपारायणिन्- -णी पारा १४.

नाम-मन्त्र- -न्त्रेण बृजा ४,१७.

नाम-म(य>)यी- -यीम् पारा११.

नाम-यज्ञ- -ज्ञैः गी १६,१७.

नाम-रूप- -पयोः छां ८, १४, १; -पात् मुं३,२,८;गु३८;-पाभ्याम् बृ १,४,७[2]; -पे प्र ६,५[2]; मुं ३, २,८; छां ६,३,२;३; बृ १,६,३; सर ३,२४; गु ३८.

नामरूप-द्वार्- -द्वारा नि १७.

नामरूप-पृथक्-कृति- -तिः सर ३,३०.

नामरूप-विमुक्त- -क्तः ते६,३६.

नामरूप-विवर्जित- -तम् गु ३,५.

नामरूप-विहीना(न-आ)त्मन्- -त्मा ते ४,४९.

नामरूपा(प-आ)त्मक- -कम् त्रु २,९; सर २,१०.

नामरूपा(प-आ)त्मन्- -त्मना सर २,१.

a) °भिदेशात् इति अव्या. । b) वैप१ यद्र. । c) एतत् रू. एव क्वचित् वा. क्रिवि. इति कृत्वा द्वि१ सदन्यैः पृथक् अव्य. इति प्रादर्शि? (तु. MW.) । d) मा ४०, ३ । e) मा ३२, ३ । f) सकृत् 'माऽऽविथ' इति आन., 'माविध' इति अव्या. । g) तु. सस्थ. टि. धारा->-राः । h) 'सामानि' इति क्वाचित्कः निसा. मुपा. यनि. सु-शोधः । i) 'अमृतनामधेयानि' इति आन., 'नामधेयानि' इति अव्या. । j) तैआ ३,१२,७ । k) तैआआ १०, ६७ । 'नान्यः' इति नादी., 'मान्यः' इति नादी. संटि. । l) 'नाम्नि' इति निसा. मुपा. यनि. सु-शोधः (तु. अव्या.) । m) 'वाचः' इति शांआ ६,१७ । n) °म्नः इति अव्या. । o) 'नाम' इति अव्या. । p) पा ३,४,५८ । q) =मात्राविशेष- ।

नामरूपा(प-आ)दि–
नामरूपादि-क– -कम् ते ५, ११.
नाम-रूप-ज्ञाना(न–अ–)गोचर– -रम् मुद्र २.
नाम-षट्क– -कम् व ४६२ : ४.
नाम-संकीर्तन– -नात् शि १,२०.
नामसंकीर्तन-पर– -रः १संन्या २,५९.
नाम-संख्या(ख्या–आ)दि(क>)-का– -काः महा ५,१२३.
नाम-सौन्दर्य-जाति– -तयः आवो २२.
नामा(म-आ)कर्षि(न्>)णी[a]– -णी आथ ३९५ : ११.
नामा(म-आ)ख्यात[a]– -तम् २प्र ३४ : ५.
नामा(म-आ)दि– -दिभ्यः या २,३.
नामिन्[b]– -मी रापू ४,३.
नामो(म-उ)च्चार–मात्र– -त्रेण रुजा १,१[c].
नामो(म-उ)च्चारण–मात्र– -त्रेण कलि १.
नायक– √नी द्र.
नारक–,नारकिन्– १नरक– द्र.
नारङ्ग[d]– -ङ्गैः सार २३२ : १५.
नारङ्ग-फल– -लम् शि ६,१३.
नारद[e]– -०द नाप २; ६,१४;१५; ३३;३७; -दः छां७,१,१;पहं१; नाप १[२];२[२];३,१;७७;४, ३८; ५,१; ६,१; ८,१; ९,१; वा १; गोउ२३; कृ२४; ह१;९; गरु१; कलि १; २; ३; गोच ६५ : १; तुल ७० : १; नार १; राधा २, ७; सार २३० : ८; १७; २२; २३१ : ४; २३२:४; व ४६५: १; गी १०,१३;२६; -दम् नाप १;२[२];७; सार २३० : ९; -दात् गोउ ६८; -दाय ह ९; गरु १; व ४६५:१; -देन नाप २; सार २३० : १८;२३२ : ६;१३.
नारद-नु(त>)ता– -०ते तुल ७१ : ७.
नारद-सनका(क–आ)दि– -दिभ्यः तुल ७१ : २१.
नारदा(द-आ)दि– -दयः नापू ५, २४; सार २४९ : २०; -दिभिः सार २३५ : १६.
नारदो(द-उ)क्त–स्तव-राज– -जम् रार १,९.
नारसिंह– नर– द्र.
नारायण[f]– -ण[g] नाप३,५९; नापू४, १७; -०ण त्रिवि ७,४३[२]; गोपू ४५; नापू ३,१६; नाउ २, ३; ३,१९; -णः मै ५,८; मैत्रि ६, ८; ७,७; ना १; २[१२]; मना २, १३,१[६]§[h];२§[i]; सुबा ६[२०]; ७; नाप ४,१४; मं १, १,२; त्रिवि १,११;२, १;१५; १६[११]; १७[२]; ४,१४;५,१०;१२;७,४३[२j];८, ६;१३; मुद्र २; पै ४, ३; महा १,१[३]; तुअ २; पप ४१९:२०; अध्या १; कुं १७; ता ३,१-८; गोउ १७; १९; ६३; दत्ता ३; मु १, १,३१[k]; च २०:१; द्व २; म ४८:१८; तुल ७० : २;७१: २१; नापू १, २;१३[२];१५; २, १६; ४, २;३०; ५, १२;१५; १६[२];१७[२]; नाउ १,११[२];१२[४]; १३[२];१७[२];१८[२];२३;२८;२,१; १३; ३,१;२;५;२२; कृपु २५; सार २२० : १९; २०; २५६ : १३; २५७:१७;२१;२७४:५; २७५ : ८;१३;१४;१६;२७६: ८; २८० : १४; २८५ : १३; २८९ : १;१६;भव२,४२; -णम् गर्भ ४; ना ४; मना२,१३,१[३]§[l]; नृपू ५,८; १योत ८९; आबो १; त्रिब्रा२,१४३;त्रिवि८,५; रार१, ७;राउ४,१; महा १,१§[m];योशि ५,४४; दत्ता १, १[२]; च २० : १०§[m]; नापू १, १४;१७;१९; ४,२६;नाउ १,२४; सार२४३ : ४; २५० : १५; २५२ : १९; २५७ : २०; २३; २७४ : ३; -णस्य ना ३[२]; त्रिवि २,१[२]; ता १,२; कलि १; नापू २,३; -णात् ना १[८]; सुबा १२; त्रिवि २, १६[१०]; नापू ५,४; नाउ १,१३; ३,४;५[२]; -णाय ना ३[२];४; मना १,६§[n]; आबो१[२]; त्रिवि७,३१; ३४;३९[२];४१; ४५; ता १,२[२]; म ४८ : ११;१६;२१; ४९:६; १३; १७; २१; क ६३ : ११; नापू२,२;३,२;६;७;९;१४;५, ४;६,१५; नाउ २,१०;११; व ४५७ : ८; ११; ४६३ : ४§[n]; ४६४ : २३; -णे ना १; त्रिवि २, १६;८,५; योशि ५,५४; क६४: ९; नाउ १,२८; -णेन दे १४; रार२,६[१०];दत्ता१,१;सार२३६: २३; २३७ : १.
नारायणी[o]– -०णि व ४३१:२; ४५८ : १०; -णी कालि ४०१ : १०; श्या १३.

a) समाहारे द्वस. । b) टिलोपः (पा ६,४,१४४) । c) °रणमा° इति अध्या. । d) व्यु.? =फलविशेष– । e) व्यु.? =देवर्षि– । f) व्यु.? [वैतु. मनु १, १० (=नर–>-नार–>)] । g) अविभक्तिको निर्देशः द्र. । h) तैआ १०, ११, १[२] । अन्यत्र °णप° इति मुपा. (तु. एकत्र तैआ १०, ११, १) यनि. सु-शोधः (तु. JC.) । i) तैआ १०, ११, २ । j) एकतरत्र तु. एपू. टि. । k) =तदाख्योपनिषद्विशेष– । l) तैआ १०, ११, १[३] । m) तैआ १०,११,१ । n) तैआ १०, १, ६ । o) =आकारान्तरेण । °णः ना° इति निसा. मुपा. यनि. सु-शोधः (तु. अध्या.) ।

नारायण-क्रीडा-कन्तुक- -कम् त्रिवि ६, ५.
नारायण-निवेशि(त>)ता- -ताः नापू ५,३९.
नारायण-नृसिंहा(ह-अ)ष्टा(ष्ट-अ)-क्षर-मन्त्र- -न्त्रौ त्रिवि ७,३१.
नारायण-पद- -दम् ता ३,९.
नारायण-पर-ब्रह्मन्- -ह्मणि नापू ५, ४१.
नारायण-प्रतिपादित- -तम् नापू ३, ५.
नारायण-प्रसाद- -देन नाउ ३,१५.
नारायण-बीज[a]- -जम् त्रिवि ७, ३०.
नारायणबीज-युक्त- -क्तम् त्रिवि ७, ३३.
नारायण-मनः-प्रि(य>)या- -०ये तुल ७१ : ७.
नारायण-मन्त्र- -न्त्रः नापू ३,१.
नारायण-मय- -यः योशि ५,५४[b]; -यानि त्रिवि ५,१०.
नारायण-मुख- -खात् सार २१९: ७; २६०: १५;२७६ : ६.
नारायण-यन्त्र-मन्त्रा(न्त्र-आ)व-रणपूजा- -जाम् नापू ६, १.
नारायण-वासुदेव-द्वादशा-(श-अ)क्षर-मन्त्र- -न्त्रौ त्रिवि ७, ३४.
नारायण-व्यतिरिक्त- -क्तम् त्रिवि ५, १०.
नारायण-शब्द-पर-ब्रह्मन्- -ह्म नापू २,४.
नारायण-सायुज्य- -ज्यम् ना ५[२]; ऊ ६४ : ४.
नारायण-सारूप्य- -प्यम् त्रिवि ६, २१.

नारायण-हयग्रीव-गायत्री-मन्त्र- -न्त्रौ त्रिवि ७,३९.
नारायणां(ण-अं)श- -शैः त्रिवि ६, ७[२].
नारायणा(ण[a]-आ)त्मक- -कः रापू ४,६३.
नारायणा(ण-आ)त्मन्- -त्मा नाउ ३,२.
नारायणा(ण-अ)ष्टा(ष्ट-अ)क्षर- -रः रार ३,१[c]; -रम् नापू १,१; -रे रार ५, ३.
नारायणा(ण-अ)ष्टा(ष्ट-अ)क्षर-मन्त्र- -न्त्रम् नापू २,१.
नारायणा(ण-अ)ष्टा(ष्ट-अ)र्ण- -र्णान् रापू ४,४६[d].
नारायणा(ण-अ)स्त्र-मन्त्र- -न्त्रः त्रिवि ७,४५[e].
नारायणो(ण-उ)पासक- -काः सार २३५ : १२.
**नाराशंस-** नराशंस- द्र.
**नारिकेल[f]-** -लम् शि ६,१५.
**नारी-** नर- द्र.
**नाल[g]-**
नाल-मात्र- -त्रेण ध्या ३९.
नाल-स्थ-तन्तु- -न्तुना ते ६,८२.
**?नालमात्राविनिष्कस्प[h]-** -स्पः अना २४.
***नावरस-** ?नाप्रसं टि. द्र.
**नाविक-** नौ- द्र.
**नाश-, नाशन-, नाशित-, नाशी-** √नश् (अदर्शने) द्र.
**नासत्य[i]-** -त्यः बृजा ४,२०.
**ना(स>)सा[??i]-** -सया १योत ७०; १संन्या२,१८;-सा ते४,१०;सुबा ५; सार २४४ : १७; २६५:५; गु११; -साभ्याम् शां१,७,१४[३]; ४३; जाद ६,३०;७,१०; -साम् सुबा ९[२]; सार२६५:६;-सायाम् सुबा ५.
नासिका[??i]- -कया श्वे २,९; भव ३, २६०; -का गर्भ १; प्रा ४, १; गु २३; -काभ्याम् ऐ १, ४; -कायाः ध्या ४०[j]; -के ऐ १, ४; २,४; बृ२,४,११;४,५,१२; कुं १९; २प्र ३२ : १४.
नस्[??k]- नसोःमना२,७२§[l].
नस्य[m]- -स्यम् १योत १२८.
नासिका(का-अ)ग्र- -ग्रम् गी ६,१३; -ग्रे अता ६.
नासिका(का-अ)न्त- -न्तम् योशि ५,१८[n].
नासिका-पुट- -टम् अना २०; त्रिब्रा २,९५; -टयोः त्रिब्रा २, ११७.
नासिका-मध्य- -ध्यम् यो १, ३६.
नासिका-रन्ध्र- -न्ध्रम् यो २, ४५.
नासिका-शोधन- -नम् शि ६, २३२.
नासिक्य- -क्यम् छां१,२,२
**नासा(सा-अ)ग्र-** -ग्रम् मं २,१,७; शां १,३,६; -ग्रे त्रवि ४२;४३; ६९; त्रिब्रा २,१०९; मं १,२, ८; शां १,६[o];७,३२;४३;४५; ५१; ५२; योशि १, ७१; जाद ५,६;६,२२; वरा ५,३२.
नासाग्र-गमना(न-आ)वर्त- -र्तम् अन्न ५,३२.
नासाग्र-दत्ते(त्त-ई)क्षण- -णः शां १,७,१६.

a) =आकार-बीजाक्षर-। b) °यम् इति अज्या. संटि.। c) °रीमन्त्रः इति अज्या.। d) °र्णम् इति आन.। e) °न्त्राः इति निसा.। f) व्यु.?=फलविशेष-। g) व्यु.?। h) ताल° इत्येवं शोधः द्र. (तु. अज्या.; वैतु. 'ताला मात्रा तथाऽऽयामः' इति आन.)। i) वैप१ यद्र.। j) °याम् इति आन.। k) पा ६,१,६३। l) शौ १९,६०,१। m) पावा ६,१,६३। n) नाडि° इति अज्या.। o) °ग्रश° इति अज्या.।

नासाग्र-दर्शन-दृढ-भावना-
-नया मं २,२,२.
नासाग्र-दृष्टि- -ष्टिः योचू ७१; १०६.
नासाग्र-धारण- -णात् त्रिब्रा २, १११ª; जाद ६,२३.
नासाग्र-न्यस्त-नयन- -नः त्रिब्रां २,९२;१४६.
नासाग्रा(ग्र-अ)वलोकि(न्>)-नी- -नी ते १,२९; ३०.
नासा-चञ्चु- -ञ्चुः सार २४४ : १६.
नासा-दघ्न- -घ्नम् १संन्या २,१०.
नासा(सा-आ)दि- -दयः ऊ ६४: ५; -दि[b] १प्र ३१ : १८.
नासादि-केश-पर्यन्त- -न्तम् य ४; सु २९३ : ४.
नासादि-केशा(श-अ)न्त- -न्तम् का ७; नार ७.
नासा(सा-अ)न्त- -न्तम् त्रिब्रा २, १३९.
नासा-पुट- -टे गार ४०८ : ७; -टौ जाद ६,३४.
नासापुट-युगल- -लम् सौ २,३.
नासा(सा-आ)भरण-नील-पीत-रक्त-मणि-ज्योत्स्ना- -त्स्ना सार २६५ : ६.
नासा(सा-अ)भ्यन्तर-चारिन्- -रिणः छु ५; योशि ६,७; -रिणौ गी ५, २७.
नासा-वक्त्र[o]- -क्त्रे बृजा ४, १३.
नासिका- नासा- द्र.
नासी(र>)रा[??d]- -राम् सुबा ९[२].
नास्तिक-, नास्तित्व- ५न-* द्र.
नाहाश्वथ्यः[e] सूता ३,४.

नि[f] छां २,८,२.
१नि(स्>)ः-शङ्क[g]- -ङ्कम्[b] महा ४, ९४;मु२,२,१३;सार२८४:१९.
निःशङ्क-रति-(द>)दा[i]- -दा सार २२३ : ५.
२निःश(ङ्क[h]>)ङ्का[i]- -ङ्का सार २३४ : ६; २६३ : ३; २८२ : १०; २८४ : १५.
नि(स्>)ः-शब्द[g]- -ब्दः मैत्रि ६,२३; -ब्दम् छु २; २१; नाद ४८; ४९; ध्या २.
नि(स्>)ः√शिष्>शेषि
निःशेषित-
निःशेषित-जगत्-कार्य- -र्यः महा २,२९.
नि(स्>)ः-शेष[g]- -षम्[b] राउ ५,७, २३; पै ३, १; अन्न ४, ८४; अध्या ३९; -षेण[b] ते ६,९६.
निःशेष-दुःख-निवृत्ति- -त्तौ सांसू ३,८४.
निःशेष-विलय- -यः अध्या १७.
निःशेषा(ष-अ-)शेष-चेष्टित- -तः वरा २,८१.
नि(स्>)ः-श्रेयस[i]- -सम् कौ २, १४;शां३,४;योशि६,४४;-साय त्रिब्रा २,१२८; सार २३०:३.
नैःश्रेयसिक[j]- -कम् भव ५, ६.
निःश्रेयस-कर- -रम् भव ५,८; -रौ गी ५,२.
निःश्रेयसा(स-आ)दान- -नम् कौ २,१४;३,२[k].
नि(स्>)ः√श्वस्
निः-श्वसत्- -सन् २योत २,४.
निः-श्वस्य यो १,४५.
निः-श्वास- -सः १योत १४१[l].

निःश्वासो(स-उ)च्छ्वास-कास- -साः जाद ४,३०.
निःश्वासो(स-उ)च्छ्वासन- -नम् जाद ४,४५.
नि(स्>)ः-संशय[g]- -यः निर्वा २९७ : ३.
१नि(स्>)ः-संकल्प[m]- -ल्पात् महा २, ७०.
निःसंकल्प-क्षमा-लुब्धा(ब्ध-आ)हारा(र-अ)प्रमादता-तत्त्व-सेवन[n]- -नम् मं १,२,२.
२नि(स्>)ः-संकल्प[g]- -ल्पः मैत्रि ६, १९; ३०.
नि(स्>)ः-सङ्ग[g]- -ङ्गः गौ ३, ४५; नाप ५, २५; २कौल ९; -ङ्गम् गौ ४,७९[b]; -ङ्गस्य सांसू ५,१३; -ङ्गे सांसू ६,२७.
निःसङ्ग-तत्त्व-योग-ज्ञ- -ज्ञः छु २१[o].
निःसङ्ग-ता- -ता मं १,१,४.
निःसङ्ग-त्व- -त्वात् सांसू ५,६५.
निःसङ्ग-व्यवहार-
निःसङ्गव्यवहार-त्व- -त्वात् अन्न ४,८८.
नि(स>)ः-सार[g]- -रः महा २, ३४; -रम् नाप ३, १५; भव १, १; -रे मै १,२; मैत्रि १,३; सुबा ८; द १६.
नि(स्>)ः√सृ
निः-सृत,ता- -तम् क २, ३, २; सुबा ८; -ता[p] क २,३,१६; छां ८,६,६; योशि ६,४.
नि(स्>)ः-स्तुति[g]- -तिः नाप६,३८.
नि(स्>)ः-ष्ठीक[g]- -कस्य महा ३, ४८; या २, १४[q].

a) °भ्रे घा° इति निसा. । b) वा.क्रिवि.द्र. । c) द्वस. एकवत्त्वं द्र. (पा २,४,२) । d) व्यु.? =नाडीविशेष-।
e) पा.? 'नः आह आश्मरथ्य-(<*अश्मरथ-)>-थ्यः' इति त्रिपदः शोधः द्र. । f) 'निधनम्' इत्यस्य पूर्वांशः द्र. ।
g) बस. (पावा २, २, २४) । h) विशेवि. द्र. । i) पा ५,४,७७ । j) पा ५,१,१०९ । k) 'निःश्रेयसम्' इति आन., अध्या. । l) 'निश्वसन्' इति निसा., 'श्वसतः, श्वासतः' इति अध्या. संटि. । m) प्रास. (पावा २,२,१८) । n) समाहारे द्वस. । o) 'निःसङ्गः साङ्गयोगज्ञः' इति अध्या. । p) तु. सस्थ. टि. 'अभि' । q) विसर्गलोपः (पावा ८,३,३६) ।

नि(स्>)ः-स्पृह[a]- -हः मै २, ११; मैत्रि २,७[b]; नाप ३, ५९; सार ४,२; महा २, ६२; तुअ १८; गी २,७१; ६,१८.

निःस्पृह-चेतस्- -तसा त्रिब्रा २, १६३; २अव ३३८:३.

निःस्पृह-ता- -ता शां १, १[c].

निःस्पृह-त्व- -त्वम् नाप ४,२४.

नि(स्>)ः-स्वधा-कार[a]- -रः गौ २, ३७; नाप ३, ७५; ६,३८.

नि√कष्

नि-कष[११]- -षे रुजा १,१४.

नि√कि, निचिक्युः[d] वृ ४,४,१८.

नि√कित् (निवासे)

नि-केतन[११]- -नम् १संन्या १, १; कश्रु १,१.

!निकिरविरहिततदाश्रितकर्मो-चितकृत्य[e]- -त्यम् नाप २.

नि√कुञ्च्

नि-कुञ्चन- -नात् योरा २१.

नि-कुञ्ज[११]- -ञ्जः सार २२१ : १९; २२५:११;२३२:१५;२५५:३; २७५:२३;२८१:१९;-ञ्जानाम् सार २२४ : २३; २२५ : ११; २३४:२; -ञ्जे सार २२५ : १५; २५१:२१;२५३: २२;२७४: २२; २७९ : ९; २८४ : २३; २८६ : १५; -ञ्जेषु सार २३७: ७; -ञ्जैः सार २६९ : २२.

निकुञ्ज-केलि-कौतुका(क-आ)-विष्ट-दे(ह>)हा- -हाम् सार २३२ : ११.

निकुञ्ज-ता- -ताम् सार२२२:१९; २२३:१;२३७ : ६;२४२ : ६.

निकुञ्ज-देवी- -वीम् सार २८०:४; -व्या सार २२३:१०; २२६:१; २२९:६; २३२:२२;२४०:३; २४५ : १०; २४६ : ७; १९; २४८ : १६;२५० : १५;२५९: १७; २६१ : २२; २७५:४; ५; २७७ : २२;२८१ : ९;२८३ : ८; -व्याः सार २२२ : २; १६; २२३ : १३; २२४ : १; १६; २२६ : १४;२२७ : २०; २३९ : १४; १७; २२; २४० : ५; २४८ : ११; १२; २५० : १८;२५२ : ११; २५४ : १८; २५९:२;३;२६०:१७; २७९: २०;२८१:१२;२८७ : ४;१२; २८८ : ११; २९१:१५.

निकुञ्ज-नाना-लता-ग्रन्थि- -न्थिः सार २४५ : २२.

निकुञ्ज-रास-स्थल- -लानि सार २४८ : १५.

निकुञ्ज-लीला- -लाः सार २२६ : २१.

निकुञ्ज-श्रेणि- -णिषु सार २२४ : ४; २४५ : २३; २६३ :४.

निकुञ्जे(ञ्ज-ई)श्व(र>)री- -र्यां सार २५८ : ६.

नि√कृ

नि-कृत-

निकृत-त्व- -त्वम् मै ३, ५[f].

नि√कृन्त्>कृन्ति, निकृन्तयेत् वृजा ३,३४; लु १३; त्रिब्रा २, २२; योशि ६, २७.

नि√कृष्

नि-कर्ष[११६]- -र्षेण इ १६ : १०.

नि√क्षिप्, निक्षिपन्ते सांसू ६, ८; निक्षिपेत् वृजा ३, १२; जाद ३, १०.

नि-क्षिप्त- -प्तम् ब्रवि ४४.

नि-क्षिप्य मं २,५,२; जाद ३,९; १०; प्रा १,१; क ६३:१०; वपं ३१२ : २३.

नि√खन्,>खानि,निखनेत् शा ८. निचखान सं १४;१७. निखानयन्ति आर्षे ७ : ६.

नि-खर[h]- -रम् ब्रवि ७३.

नि-खिल[a]- -लः हे १२; -लानि श्वे १, ३; नाप ९,२.

निखिल-निगमो(म-उ)दित-स-काम-कर्म-व्यवहार- -रः मवा ४.

नि√*गच्छ्,गम्,निगच्छति वृ २,१, १८; ४, ३, ३६; नाप ३, ३६; यो १,५०; गी ९,३१;१८,३६.

नि-गम[११]- -मः कृ ६; कृपु ५; -मम् कृपु १४; -माः सूता १,७.

नैगम- -मः नाप ५, २६.

निगमा(म-अ)न्त-रूप- -पम् पा ९,७.

निगमो(म-उ)दित- -तानि सूता ३, १.

नि-गमन- -नम् सुबा १३[i].

नि√गद्, निगद्यते लु १०; घ्या ४४; ४८; योचू ७; ४९; गोउ ५०; ५६; ५८; वउ २, ३०; निगद्यन्ते गार ४०७ : २०.

नि√गल्

नि-गल[j]-

निगल-च्छेदन- -नाय त्रिवि ७, ४६[k].

नि-गीर्ण- नि√गॄ(निगरणे) द्र.

नि√गुह्

निगूढ,ढा- -ढम् ब्रवि २०; अवि २०; -ढाम् श्वे १,३; के १, १; नाप ९, २; वि १.

a) बस. (पावा २,२,२४)। b) विसर्गलोपः (पावा ८,३,३६)। c) °हा इति अव्या. सुपा. यनि. सु-शोधः। d) वैतु. पा. (६, १, ३५) <नि√की<√चाय् इति। e) पा.? निकरविरहिततदाश्रमोचितकृत्य- इति शोधः (तु. अव्या.)। f) 'निराकृतित्वम्' इति मैत्रि ३, ५। g) नाप.। =पोत्र। h) तु. सस्थ. टि. गोलाख-। i) °नम्° इति आन., °नः इति अव्या.। j) =निगड- (=पाश-)। k) निर्गल° इति निसा.।

निगूढ–गुच्छ-पुष्प–पराग–
-गाः सार २२८ : १५.
निगूढ-वत् श्वे १,१४; त्र ३,९; ध्या २२.
नि√[a]गृह्,ग्रह्, निगृह्णामि गी ९, १९; निगृह्णीयात् गौ ३,४२; शि ७,३६.
नि-गृहीत– -तम् गौ ३,३५; -तस्य गौ ३,३४; महा ५,७३; -तानि गी २, ६८.
निगृहीता(त-अ)निल– -लम् मैत्रि ६, २१.
निगृहीते(त-इ)न्द्रिय-द्विष्– -द्विषः महा ५,७७; मु २,२,४१.
नि-गृह्य भव ३,२७.
नि-ग्रह– -हः गौ ३,४१; अन्न ४, ९२; गी ३,३३; -हम् गी ६, ३४; -हे मु २,२,३८.
निग्रह-कर्मन्– -र्मणि महा ४, १०५.
निग्रहा(ह-अ)नुग्रह–रू(प>)-पा– -पा सी ३४.
निग्रहा(ह-आ)यत्त[a]– -त्तम् गौ ३,४०.
नि√गॄ(निगरणे)>गिर्, निगिरति मै २, ७; मैत्रि २, ६; निगिरेत् ते ६,८६[b].
नि-गीर्ण– -र्णः महा ४,६५.
नि√चाय्
नि-चाय्य क १,१,१७; ३,१५; श्वे २,१§[c]; ४,११; अशि ५,६[d].
नि-चाय्य-
निचाय्य-त्व– -त्वात् ब्रसू १, २, ७.
नि√चृत्
नि-चृत्[११]–
निचृद्-गायत्री[११]– -त्री वउ५,२.

१निज° भव २,२६.
२निज,जा[i]– -जम् मैत्रे १,४,१२; १योत१७; स्क१३;योशि१,१५; अन्न ५,१३; -जया त्रिवि४,१४.
निज-धर्मा(र्म-अ)भिव्यक्ति– -क्तिः सांसू ५,९५.
निज-बोध–बीज– -जम् हे १३.
निज-मन्दिर– -रम् त्रिवि ७, ६; सि ६,२७.
निज-महिमन्– -म्नि आवो ३.
निज-मुक्त– -क्तस्य सांसू १,८६.
निज-वत् स्क २.
निज-शक्ति– -क्तिः सांसू ५,४३.
निजशक्ति-योग– -गः सांसू ५, ३६.
निजशक्त्य(क्ति-अ)भिव्यक्ति– -क्तेः सांसू ५,५१.
निजशक्त्यु(क्ति-उ)द्भव– -वम् सांसू ५, ३१.
निज-स्वरूप– -पाय गोउ ६४.
निजा(ज-आ)नन्द– -न्दे द १८.
निजा(ज-अ)भ्यास-मार्ग– -र्गात् सौ २, २.
नि√तप्, नितपति छां ७,११,१.
नि-तर–
नितराम्[e] सार २६५ : ५.
नि-तल[f]–
नितल-लोक-ज्ञान– -नम् शां १, ७, ५२.
१नित्य,त्या°– -त्यः क १,२,१८;२, २,१३; बृ ४,४,२३; श्वे६,१३; गौ४, ५९; हं २१; ना २; नृउ ९,८; सुबा ७; ससा २; ४; शु २, १७; ते ३,४२;४८; ६,८७; त्रवि ९७; मैत्रे १, ४, ११; ३, २;६; नाप ६,२३; श २०;३०; त्रिब्रा १, २; त्रिवि १, ११; २, १६[२];३,२; योशि ४,१२; अन्न ५,७५; कुं २५; भ १,८; जाद ५,१३;१०, २; गोपू २०; गोउ ३०;३५; इ १२ : १२; नापू १, १२; भव २, २१;२७;३०;३७; ४०; ४९; वउ ५, ४९; ६, ५१; सांसू६,१३;गी२,२०;२४;-त्यम् क १,२,१०; ३,१५; मुं १, १, ६;३,१,५; श्वे१,१२;३,२१;४, २१;६,२;१७; गौ १,३;३,३३; ४,११;७२;८२; मैत्रि७,८;त्रवि ३; कै १,१६; मना २,१३,१§[h]; अना २६;२८;२९; अशि ३,९; बृजा ८,१-५; नृपू४, १५, ३३; ४,१६;५,१२-१८; नृउ९,११; १७; शु १,१८; ते १,५१;२,८; ६,७०;८०; त्रवि ४७;७७;८०; १योत ९;१२३; १२६; १२८[२]; नाप ३, ३१;४०;५३; ६८;७०; ७३; ७४;५, ३५[२]; ६, ३६; ९, ११; त्रिब्रा २, २०; २६; योचू २३;३६; ७२[२]; ८७[२]; सी २६; निर्वा २९८:१७; मं ३,१,२; श २७;त्रिवि २,१; ७,१[?]; रार १, ९;४,१;१२;राउ१,२;५,१[२];४; बा ३३; ३६; मुद्र ४; शां १, ७, ५१; पै ३,४;४,२३; भि ६;महा १, १§[h]; ३,४७; ४, १६; १७; ८६;५, ६२; ६३;६, १९; ६१; ६४;८३; योशि १,६;६६;८४; १०१;१२६;६,५४; १संन्या २, ६०; ७७; ए १३; अन्न १, ३२; ३४;२,४२;४,२६;५,४९;५२; ६९;७२;११५; अग्नि१;८;३६; अध्या १;६१; पाशु २,२९;४१; १अव २७; त्रिता ४,३७;५, १; दे १०; करु ७;२४;२९; रुद्र ३;

a) अत्र पूप. 'मनसः' इति नापू. पदेनाऽन्वितमिति गमकत्वात् स. सुमर्षः । b) 'निगिरिः' इति अज्या. । c) मा ११, १ । d) 'निदिध्यात्' इति अज्या. । e) व्यु.? =अव्य. (=५न-*) । f) वैप१ यद्र. । g) पा ५,४,११ । h) तैआ १०, ११, १ । i) °त्यग° इति सुपा. यनि. शोधः (तु. निसा.) ।

३२; यो १,१७; ४६;५५;५६; ६२; २,२२;३३;३, ३;३५; म २,१;२७; रुजा ३,१; ग ३;६[२]; १४; जाद २, ५;३,३; ४,२६; २७;३९;५,१०;६, १०[२];११[२]; १८; ८,८; ९,३; पं ३३; गोपू २८[२]; गोउ ४९; ६०; या २, १३;२२; वरा २,२१; ४,१५[२]; ३५;५,५;६;४८;५६; शा ११; दत्ता १,६;३; सौ ३,१; सर ३, १;३;७;८;११; सु १, १, २२; २,२,७२[२]; च २० : १०§[a]; चा १३; २प्र ३४ : २०;२३;३५ : २; का ६; नार ५; नापू २,१३; नाउ ३,६; पा ९, १०; १०,३; राधा १, ५; सार २२८ : १२; २३१:९;२४३ : ८;२४९ : ३; २५३:१७; २५४ : १२;२५८: १;५;२७०:१;२७८:१;२७९: २०; २८३ : ११; सू ५; वद्ध ३१५ : ९; शि ५,२९; ७,४२; ४५;४६;४८;९२; सिशि ३८२: १५; रा ४२३:१०; व ४५६ : १;४६२:४;४६५ : १२; विद्या १; १कौल ३:२; भव १,१०[२]; ३७; २,१३;५७; ६०;३,४;४, १; ५, ११; १४; पिंब्र ६, १९; अवि ३; वउ ५,६;९;१६; ब्रसू २,२,१४; गी २,२१;२६;३०; ३, १५;३१;९, ६;१०,९;११, ५२; १३, ९; १८, ५२; -त्यस्य आबो २५; १आ २९; सांसू १, १२; गी २,१८; -त्या १संन्या २, ४४;राधा३,१५;आय३९८:२; १६; गु ७१; -त्याः योशि १, १५५; भव २,१;१४; -त्यानाम् श्वे ६, १३; गोपू २०; गु ७१; भव २,४९; -त्याय नाउ २,४; -त्ये महा ४,१२२; ६,१३; नापू ५,३०;वउ ५,४५;६,१५;-०त्ये व ४६६ :१; -त्येन वउ ६,२२.

नैत्यक[b]– -कम् शि ७, २५.

नित्य-कर्मन्– -र्म सूता १, २४; -र्माणि जाद ७, ४.

नित्य-क्रीडा– -डाम् सार २४६:८.

नित्यक्रीडा(डा-आ)त्मन्– -त्मने सार २५१ : ११.

नित्य–चिद्-घन– -नम् महा ४, ११९.

नित्य-चिन्मात्र–रूप– -पः मैत्रे ३, १६[c].

नित्य-जात– -तम् गी २, २६.

नित्य—ज्ञाना(न-आ)नन्द–रूप– -पाः सि २, १२.

नित्य-ता– -ता महा ६,२९.

नित्य-तृप्त,प्ता– -प्तः ते ३,१५; पप ४२० : १२; अन्न ५,९७; १आ १३;गी४,२०; -प्ता अन्न१,४८.

नित्य-तृप्ति– -प्तिः मं ५,१,८.

नित्य-त्व– -त्वम् ब्रवि २५; त्रिवि २,१[३];८; ३, २[२]; सांसू ५,४५; ४८; ब्रसू १,३,२९; -त्वात् योसू ४,१०; ब्रसू २,३,१७;४,१६; -त्वे सांसू ६,३३; -त्वेन ससा १, २३.

नित्यत्व-साधन– -नम् ब्रवि२६.

नित्यत्वा(त्व-अ)नित्यत्व– -त्वे त्रिवि २,१.

नित्य-दा[d] ते ३,२७[e]; रुजा२,३;४.

नित्य-निर्मल–रूपा(प—आ)त्मन्– -त्मा ते ६,४०.

नित्य-निवृत्त,त्ता– -त्तः पहं २; -त्ता नृउ ९,४.

नित्य–नूत्न-भाव–भेद—शृङ्गार[f]– -रम् सार २२८ : १२.

नित्य-नैमित्ति(क>)का– -काः भव २, ६७.

नित्यनैमित्तिक-कर्मन्– -र्मभिः सी ३६.

नित्यनैमित्तिक—याग-व्रत-तपो-दाना(न–आ)दि– -दिषु नि २६.

नित्य-परिपूर्ण– -र्णः त्रिवि १,११; २,१५; -र्णम् त्रिवि ७, १७.

§[g]नित्य-पु(ष्ट>)ष्टा– -ष्टाम् मना १,१०; २शिसं३६;व४६२:१२.

नित्य-पूत– -तः पप ४२० : १०; ब्रवि ९८; तुअ ४.

नित्यपूत-स्थ– -स्थः पहं १[h]; लिं ३११ : ५; ६.

नित्य–प्रत्यक्ष-निर्णय– -यः ते ४, ७०[i].

नित्य-प्रत्यक्ष–रूपा(प—आ)त्मन्– -त्मा ते ४,७०.

नित्य-प्रबुद्ध–चित्त– -त्तःमहा४,११

नित्य-प्रमुदित– -ताः मैत्रि ७,८.

नित्य-प्रवसित– -ताः मैत्रि ७,८.

नित्य-बलि– -लिम् शि ४,१६.

नित्य-बुद्ध-विशुद्धै(द्ध-ए)क-सच्-चिद्-आनन्द[j]– -न्दम् ते ३, ११.

नित्य-बोध– -धः पहं २[k].

नित्य–बोध-स्वरू(प>)पा– -पः (?पा[l]) ध्या ९३, १४; -पा ध्या ९३, १३.

नित्य–ब्रह्म-चारिन्– -री म ४९:९.

नित्य-मङ्गल– -लम् त्रिवि ७, २; सि १, ८.

a) तैआ १०, ११, १। b) पा ५, १, १३२। c) °त्यं चि° इति अञ्या.। d) कालवाचित्वसामान्यस्य वसं. (पा ५,३,१५)। e) 'सर्वदा' 'नित्यशः' इति यक्र. अञ्या., अञ्या. संटि.। f) बस.>कस.>बस.। g) खि ५,८७,९। h) °कूट° इति निसा.। i) °क्षनिर्णितः, °क्षनिर्णीतः इति यक्र. अञ्या., अञ्या. संटि.। j) समाहारे द्वस.। k) °पूतस्थः इति अञ्या.। l) पा.? यनि. शोधः (तु. निसा.)।

नित्यमङ्गल-मन्दिर- -रम् त्रिवि ७,१९; सि ६, ६.
नित्य-मुक्त- -क्तः सांसू ५,७; -क्तम् पै १,३; -क्तस्य मैत्रि ६, २८[a]; -क्तैः त्रिवि ६,२१;२३; सि ५, १४;६,१६.
नित्यमुक्त-चिद्-आत्मन्- -त्मने वरा २,३३.
नित्यमुक्त-त्व- -त्वम् सांसू १, १६२.
नित्यमुक्त-ब्रह्म-स्थान- -नम् नि ४९.
नित्यमुक्त-स्वरूप- -पम् त्रिवि ७,१७; सि ६,३.
नित्यमुक्तस्वरूप-वत्- -वान् ते ३,२९.
नित्य-याचनक- -काः मैत्रि ७,८.
नित्य-युक्त- -क्तः नाप ६, २; गी ७, १७; -क्तस्य गौ १,२५; गी ८,१४; -क्ताः गी ९,१४;१२, २; -क्तैः मु २९४ : १६.
नित्य-रूप- -पः ते ३,२.
नित्य-लीला- -लया सार २४८ : २२; -लायाम् सार २२४ : ३; २४१ : ३.
नित्यलील(ला-अ)नुरक्त- -क्तः राधा ४,२१.
नित्यलीला-भजना(न-आ)-नन्द- -न्दः सार २५४ : ११.
नित्य-विनिश्चल- -लः कुं १६.
नित्य-विहार-रहस्य-केलि-कला-(ला-आ)विर्भाव-भावित- -तम् सार २५५ : २.
नित्य-विहित-कर्म-फल-त्याग- -गः शां १८,८.
नित्य-वैकुण्ठ- -ण्ठम् त्रिवि १,११.
नित्य-वैरिन्- -रिणा गी ३,३९.
नित्य-शस(>:) ब्रबि १४; क्षु १२; त्रिब्रा २, ६३; १अव १०; २२; त्रिता ५, १४; रुजा २, २; ४, १२; राधा ३, १४; अवि १४; गी ८,१४.
नित्य-शान्ति- -न्त्यै गोपू २३.
नित्य-शुचि-सुखा(ख-आ)त्म-ख्याति- -तिः योसू २,५.
नित्य-शुद्ध- -०द्ध अन्न ५; -द्धः ते ३, २०; ५,४०; मं ३,१,६; -द्धाय नाउ २,४.
नित्य-शुद्ध-चिद्-आनन्द-सत्ता-मात्र- -त्रः ते ३,११.
नित्य-शुद्ध-बुद्ध-परब्रह्मा(ह्म-आ)-नन्दमय- -यः नापू २,१७.
नित्य-शुद्ध-बुद्ध-मुक्त-शिवै(व-ऐ)-क्य-भक्त[b]- -क्ताः शि ३,८.
नित्य-शुद्ध-बुद्ध-मुक्त-सत्य-परमा-(म-अ)नन्ता(न्त-अ)द्वय-परिपूर्ण- -र्णः ता ३,८[c].
नित्य-शुद्ध-बुद्ध-मुक्त-सद्-अद्वय- -यः अक्षि ४६.
नित्य-शुद्ध-बुद्ध-मुक्त-स्वभाव- -वस्य सांसू १,१९.
नित्य-शुद्ध-विमुक्तै(क्त-ए)क- -कम् वरा ३,२.
नित्य-शेष-स्वरूप- -पः ते ३,१२.
नित्य-सत्त्व-स्थ- -स्थः नाप ४, १३; गी २, ४५.
नित्य-संन्यासिन्- -सी गी ५,३.
नित्य-समाधि- -धिना सौ २,१८.
नित्य-सा(स-आ)कार- -रः त्रिवि २, ६[२].
नित्य-सिद्ध- -द्धः १आ ६.
नित्य-सिद्धि-स्वरूप- -पःते५,६९
नित्य-स्थल- -लम् राधा १,२८;३, १८;४,२६; -लानि राधा ३,६.
नित्यस्थल-सामीप्य-योग्य- -ग्यः राधा २,७.
नित्या(त्य-आ)कान्त- -न्ते चक्र १.
नित्या(त्य-आ)क्षालन- -नम् वउ ६, ३९.
नित्या(त्य-आ)नन्द,न्दा- -न्दः शु १,१८[२]; ते ४,६; श २०; सार २४५:२०; -न्दम् नृउ २,१;शु १,१८; -न्दा अन्न १,५; -न्दाय सार २४५:१५; -न्दे रापू १,६.
नित्यानन्द-चिद्विलासा-(स-आ)त्मक-
नित्यानन्दचिद्विलासात्मक-त्व- -त्वात् त्रिवि ३,२.
नित्यानन्द-मय- -यः नाप ८, १२; -यम् शु १, १८[२]; ते ६, ७२;१०२.
नित्यानन्द-मूर्ति-
नित्यानन्दमूर्ति-मत्- -मद्भिः सि ५,८.
नित्यानन्द-रूप- -पः सार २३८:१८; काम १६; -पम् सार २४८:१५;-पेण सार२३८:१८.
नित्यानन्द-लीला- -लाम् सार २७० : ३.
नित्यानन्द-स्वरूप- -पःते३,२७
नित्यानन्दस्वरूपा(प-आ)-त्मन्- -त्मा ते ४,६२.
नित्यानन्दा(न्द-अ)वाक्षि- -क्षिः मु २,१,१.
नित्यानन्दै(न्द-ए)क-स्वरूप- -पः गोउ ३०.
नित्या(त्य-आ)नन्दि(न्>)नी- -०नि व ४३५ : १२.
१नित्या(त्य-अ)नित्य[d]- -त्यः अशि १, ३.
२नित्या(त्य-अ)नित्य[e]-
नित्यानित्य-रू(प>)पा- -पा सी १५.
नित्यानित्य-वस्तु-विचार- -रात् नि ४१.
नित्यानित्य-विवेक- -कः वरा २,३;-केन म४८:१०;१५;२०;

a) °युक्त° इति आन. संटि.। b) द्वस.>कस.>षस.। उप.तृस.। c) °रमानन्दान° इति अव्या.। d) कस.। e) द्वस.।

४९ : ५;११;१९.
नित्यानित्य-विहीना(न-आ)-
त्मन्- -त्मा ते ४,७२.
नित्या(त्य-अ)नुभव-रूप- -पस्य
१अव २१.
नित्या(त्य-अ)भियुक्त- -क्तानाम्
गी ९,२२.
नित्यो(त्य-उ)दय-
नित्योदय-व(त्>)ती- -ती
अन्न ५,५६.
नित्यो(त्य-उ)दित- -तः महा ६,
८०; -तम् त्रिब्रा २,१५३; अन्न
१,१९; ५.६६.
नित्यो(त्य-उ)युक्त- -क्तः यो २,३१;
-क्ताः गोपू २१.
नित्यो(त्य-उ)पलब्ध्य(ब्धि-अ)-
नुपलब्धि-प्रसङ्ग- -ङ्गः ब्रसू २,
३,३२.
२नि(त्य>)त्या[1a]- -त्या सुमु ११.
नि√दह्, निदहाति मना २, १§[b];
त्रिता१,६§[b];२,३१; §[b]व४३०:
६; ४६१ : ६.
१नि-दाघ[c]-
निदाघ-विनोदन-धारा-गृह-
शीकर-वर्षण- -णम् महा ४,
२६.
२निदाघ[1d]- -घ महा४,१;१७;६५;
५,३६;१७०; ६,३९; अन्न १,
३;१६;२,१३;४,१८;२५;७७;
५,७;५७; वरा ४,१३; -घः ते
५,१; महा ३, १; अन्न १,१;
१७; २,१; वरा ४,१;५,१.
निदाघ-जडभरत-दत्तात्रेय-कात्या-
यन-भरद्वाज-कपिल-वसिष्ठ-पि-
प्पलादा(द-आ)दि- -दयः
रुजा ३, १.

नि-दान[11e]- -नम् नृपू ४,१३.
निदान-वत्- -वान् नृपू ४,१३.
निदिध्यास-, निदिध्यासन-
नि√ध्यै द्र.
नि√दिश्
नि-देश-
निदेश-वर्तिन्- -र्ती गुषो ४२१:
७.
नि√दृश्
नि-दर्शन- -नम् गौ ३,३; नृपू ३,
४;६; वपू १, ४;५; २,२; ३[2];
-नात् गौ ४,३३.
नि√द्रा
नि-द्रा[11]- -द्रया योशि ६,२३; -द्रा
गौ १,१५; मै ३,५; मैत्रि ३,५;
६,२५; ध्या ८०; नाप ३, ८६;
योचू५३; योशि ५,४२; वरा २,
५९[2]; योसू १, १०; -द्राम् गौ
१, १४; सौ २, २; -द्रायाः रापू
४,५७[f]; अध्या ५.
निद्रा-जागरि(त>)ता[1]- -ता
सार २८२ : ११.
निद्रा(द्रा-आ)दि-कर्म-कृत्-
-कृत् त्रिब्रा २,८७.
निद्रा-भय-सरीसृप- -पम् मं
१,२,३.
निद्रा-भिक्षा- -क्षे १अव १४.
निद्रा-रूप- -पम् यो १,५९.
निद्रा(द्रा-अ)ल(स>)सा[1]- -सा
सार २६९ : १.
निद्रा(द्रा-आ)लस्य- -स्यौ
(?स्ये[g]) नाप ६,१; शारी ४.
निद्रालस्य-मति- -तिः ध्या
९३, ३.
निद्रालस्या(स्य-आ)दि-
-दयः हं ८; भव ४,११.

निद्रा(द्रा-आ)लस्य-प्रमादो-
(द-उ)त्थ- -त्थम् गी १८,३९.
निद्रा(द्रा-आ)लस्य-भय[h]-
-यम् वि ६.
निद्रा(द्रा-अ)वस्था- -स्था ध्या
९३,१२.
निद्रावस्था-मध्य- -ध्ये ध्या
९३,१२.
निद्रा-संचलि(त>)ता[1]- -ता
सार २३४ : ५.
निद्रा-संभावित-विप्रलम्भ-
सुख-समनुभव-तिरस्कृत-
रसिका(क-आ)नन्दा(न्द-आ)-
त्मन्- -त्मने सार २५२ : ४.
निद्रालु- -लुः अक्षि ३६; वरा ४,
१५.
नि√धा,>धापि, निदधाति पा९,८;
निदधति छां २,९,८; निदध्मसि
सूता २, १०§[i]; निधेहि नी २,
१५§[j]; निधेतन मना २,६०§[k];
निदध्यात् बृजा ३,११; वरा ५,
१७.
§[l]निदधे नापू ३,३; व ४४३ :
१६;४४९:२;४५३:१; निदधौ
के ३,६;१०; छां १,१०,५.
निधीयते बृ ३,२,१३; मैत्रि ६,
२४.
नि-धन[11m]- -नम् छां२,२,१;२;३,
२;४-७,१; ८,२; ९,८; १०,४;
११, १; १२, १[2]; १३, १[2];
१४-२१,१; बृ ६,३,४; मैत्रि ६,
२२; ब्र १; गी ३,३५.
निधन-पति- -तये मना २,
१६§[n]; बृजा ३,१४.
निधनपता[?त्य°(ति-अ)]-
न्तिक- -काय मना २, १६§[n].

a) =देवीविशेष-। b) ऋ १, ९९, १। c) =घर्म-। d) व्यु.?=ऋषिविशेष-। e) व्यु.?=आदिकारण-।
वैप१ यद्र.। f) =मकार-बीजाक्षर-। g) पा.? यनि. शोधः द्र. (तु. अध्या.)। h) समाहारे द्वस.। i) ऋ १, ५०,
१२। j) मा १६,१२। k) ऋ १०,३७,१२। l) ऋ १,२२,१७। m) क्युः प्र. (पाउ २,८१)। n) तैआ १०,
१६। o) पा.? यनि. शोधः द्र.।

निधन-भाजिन्– -जिनः छां २, ९,८.
नि-धा[g]– -§[a]धया मना २, ७३; चा २१.
नि-धान– -नम् मुं ३, १, ६; गी ९,१८;११,१८;३८.
नि-धापयित्वा[b] मै १,१; मैत्रि १,२.
नि-धाय बृ ६,४,२५; शां१,७,४३; त्रिता १,७९; म १,३[२];४;५.
नि-धि– -धयः रार २, ३५; सार २२३ : २३[२]; -धिः छां ७,१,४; या २,१; -धिम् छां ७,१,२;२, १;७,१; इ १२ : ७;१९ : २१; कालि४०३:२;-धीन् सार२२४: १०.
निधि-दातृ– -ता वपू १,६;७.
निधि-पति– -तिः वउ २,७.
नि-हित– -तः क १, २,२०§[c]; २, १,८§[d]; श्वे ३,२०§[c]; मना २, १२,१§[c]; मै२,९;५,७; मैत्रि२, ६; ६, ७; सुबा ७; ८; नाप ९, १३§[c]; श१८§[c]; ए५; अध्या १; नाउ १,७§[c]; पा ९, ३§[c]; -तम् क १,१,१४; मुं २,१, १०; ३, १,७; २,१; तै २,१,१; छां ८, ३,२; बृ २, २, ३[२]; मै ५,४; मैत्रि ४,५; ६, ४; २७[२]; के १, ३§[c]; मना१,३§[f]; २,१२,३§[c]; सुबा ८, करु ११; रुह ३६; बा १८; नाउ १, १४§[g]; गु ३६; -ता मना १,४§[h]; ए ९; सर २, ६§[i]; नापू ४, ९§[i]; ५, ३३§[i]; -ताः मुं २,१,८; २,२; मना २, १२,१§[c]; -ते श्वे ५,१.
निहिता(त-अ)र्थ– -र्थः श्वे४,१.

?निधायेत[k] मैत्रि ६, १९.
नि√ध्यै>दिध्यास्, निदिध्यासे १अव १७[l]; निदिध्यासस्व बृ २,४,४; ४, ५,५.
नि-दिध्यास– -सः नाप ७[m].
नि-दिध्यासन– -नम् शु ३, १३; पै ३,१; अध्या ३४; कुं ९[n].
नि-दिध्यासितव्य– -व्यः बृ २,४, ५; ४,५,६.
निध्रुव[o]–
नैध्रुवि[l]– -विः, -वेः बृ ६,५,३.
नि√नद्
नि-नद– -दम् छां ३,१३,७.
नि-नाद– -दः नाद ४५; सौ २,८.
√निन्द्,निन्दति अन्न ५,२४;निन्दन्ति बृजा ५,१५; निन्दामि अन्न ५, ५९; निन्दात् २कौल ७?[p]; ८?[p]; निन्देत् छां २, १४-१८, २;२०,२; निन्द्यात् १कौल७ः१.
निन्दा–
निन्दा-गर्व-मत्सर-दम्भ-दर्पे-(र्प-इ)च्छा-द्वेष-सुख-दुःख-काम-क्रोध-लोभ-मोह-हर्षा(र्ष-अ)-सूया(या-अ)हंकार(र-आ)दि– -दीन् पहं २.
निन्दा(न्दा-अ)निन्दा-गर्व-मत्सर-दम्भ-दर्प-द्वेष-काम-क्रोध-लोभ-मोह-हर्षा(र्ष-अ)मर्षा-(र्ष-अ)सूया(या-आ)त्मसंरक्षणा-(ण-आ)दिक– -कम् तुअ१२[q].
निन्दा(न्दा-अ)पवाद– -दम् शि ७,३६.
निन्दा(न्दा-अ)मर्ष–सहिष्णु– -ष्णुः पप ४२० : १२.
निन्दा-स्तुति– -ती शा १८.

निन्दास्तुति-व्यतिरिक्त– -क्तः पप ४२० : १५.
निन्दा(न्दा-अ)हंकार-मत्सर-गर्व-दम्भे(म्भ-ई)र्ष्या(र्ष्या-अ)-सूये(या-इ)च्छा-द्वेष-सुख-दुःख-काम-क्रोध-लोभ-मोहा(ह–आ)-दि– -दीन् नाप ३,८६.
निन्दित– -तः करु ४; कुं १२; कक्षु ३, ४; भव ४, ३; -ताः इ १९ : ११.
निन्द्य– -न्द्यम् नाप ५,१२.
नि√पत्(पतने), निपतन्ति महा ५, १४२; न्यपतत् सार २४३,१०.
निपपात सूता ३, ८.
नि-पतित– -तम् सार २४३:१०.
नि-पात[g]– -तः २प्र ३४:७; -तेषु २प्र ३५ : ७.
नि√पद्,निपद्यते बृ ६,३,१.
नि√पीड्
नि-पीड्य नृउ ४, ५; ध्या ९३; त्रिब्रा २,४४;४६; जाद ३,८.
नि√पुण्
नि-पुण– -णः अन्न २, ६; वरा ३, २६; भव २,२९.
नि√पृ>पृ[r], निपृणाति बृ १,४,१६.
नि√बन्ध्, निबध्नाति मै ३,२; मैत्रि ३,२; ६,३०; भव ३, १०; गी १४, ७; ८; निबध्नन्ति मु २, २,४७; गी ४,४१; ९, ९; १४, ५; निबध्नीयात् शां १,३,३.
निबध्यते गी ४, २२; ५, १२; १८,१७; निबध्यन्ते शि १,१३.
नि-बद्ध– -द्धः ध्या ८६; शि ७, १०३; गी १८,६०.
नि-बध्नत्– -ध्नन् त्रिब्रा २,९३.

a) ऋ १०,७३,११। b) पा ७,१,३८। c) तैआ १०,१०,१। d) ऋ ३,२९,२। e) तैआ १०,१०,३। f) 'विभृतम्' इति मा ३२,९। g) तैआ ८,१,१ h) मा ३२,९। i) ऋ १,१६४,४५। j) ऋ १०, ७१, २। k) पा.? °ध्यै° इति शोधः द्र. (तु.नापू.मन्त्र 'धारयेत्' इति)। l) 'निदिध्यासेत्' इति अध्या.। m) °सनम् इति अध्या.। n) 'न' इति अध्या. सुपा. यनि. सु-शोधः (तु. अध्या. संटि.)। o) व्यु.? =गोत्रप्रवर्तक-ऋषिविशेष–। p) पा.? 'निन्द्यात्' इति शोधः द्र. (तु. १कौल ७ : १)। q) °दर्पेच्छा° इति अध्या.। r) पा ७,३,८०।

नि-बन्ध– -न्धाः सी २९; -न्धाय गी १६,५.

नि-बन्धन– -नम् सुवा ५[१४]; ते६,५.

नि√बर्ह्>बर्हि,निबर्हय व ४६२ : १९.

नि-बिड[a]– -डम् आबो २८[b].

निबिड-तर– -रम् वरा ३,११.

नि√बुध्,>बोधि, निबोध क १, १, १४; गी १,७; १८, १३; ५०; निबोधत क१,३,१४; गौ १,३; ४; ४,५; नाद ८; वरा १,१०. निबोधयति मै २,५.

नि√भल्>भालि,निभालयसे छां ६,१२-१३,२.

नि√भृ

नि-भृत– -तम् १योत ११६.

निभृत-निकुञ्ज-गृह– -हम् सार २८४ : २२.

नि√[c]मज्ज्[c],निमज्जति महा ५,२१; योशि १,२२; अन्न १,४२;४३; ४, ४; वरा ३, २८; निमज्जसि ते ५,७२.

नि-मग्न[d]– -ग्नः मुं ३,१,२; श्वे४,७; ए २[१०]; ५[f]; -ग्नस्य आबो १७; -ग्नाः सार २५४:१०; -ग्नानाम् सार २३५ : २३.

निमग्न-ता– -ताम् सार२८३:७.

नि-मज्जन– -नम् मै १,७; मैत्रि १, ४; मैत्रे१,२; घ्या ९३,१२-१४.

नि-मज्ज्य त्रिवि ५,१३;६,१०;२१.

नि√मन्त्रि(<मन्त्र-)

नि-मन्त्रित– -तम् १संन्या २,६८; -ते इ १४ : १३.

निमित्त[g]– -त्तः नाप ५, १§[११]; -त्तम् गौ ४,२७; कठ ३१; स्व ६० : ४; सांसू ३, ६८; योसू ४, ३; -त्तस्य गौ ४, २५; सांसू ५, ११९; -त्तानाम् कठ३१; -त्तानि गी १,३१.

नैमित्तिक– -कम् भव २,६०.

निमित्त-त्व– -त्वम् सांसू ३,७४.

निमित्त-नैमित्तिक-प्रसङ्ग– -ङ्गेन सांका ४२.

निमित्त-मात्र[h]– -त्रम् गी ११,३३.

निमित्त-व्यपदेश– -शात् सांसू ५, ११०.

निमित्त-संन्यास[११]– -सः नाप ५, १[२];§[१५].

निमित्त-संभव– -वात् सांसू ६,५६.

निमित्ता(त्त-अ)भाव– -वात् सांसू ६,४४.

नि√मिष्,>मेषि, न्यमीमिषत् क ४, ४.

नि-मिष– -षम् ते ६,८९.

नैमिष[i]– -षे छाग २३ : ९; २४ : ११.

नैमिषा(ष-अ)रण्य[i]– -ण्यम् नाप १.

नैमिषीय– -याणाम् छां १,२,१३[j].

निमिषा(ष-अ)र्ध– -र्धम् ते१,४७

नि-मिषत्– -षत् मुं२,२,१; -षतः २सिसं ३३§[k]; -षन् १संन्या २, ४७; सिशि३८१:११; गी ५,९.

नि-मेष[११]– -षः त्रिवि ३, ७; ४, १२[३];§[१५]; गार ४०८:११; -षम् सी १४; -षाः बृ ३,८,९; मना १,२§[l]; -षेण महा ४, ५९.

निमेष-काल– -लः,-ले त्रिवि ४, १२.

निमेष-त्रस(>:) ते १,२४.

निमेष-मात्र– -त्रैः निरु २, ८.

निमेषा(ष-आ)दि-काल– -लात् मैत्रि ६,१४.

निमेषो(ष-उ)न्मेष– -षौ पिंब्र १, १३.

निमेषोन्मेष-वर्जि(त>)ता– -ता शां१,७,१४; -तायाम् मं१, ३,५; अता १२.

निमेषोन्मेष-संज्ञक– -कम् गु १८.

निमेषो(ष-उ)न्मेष-सृष्टि-स्थिति-संहार-तिरोधाना(न-अ)नुग्रहा-(ह-आ)दि-सर्व-शक्ति-सामर्थ्य– -र्थ्यात् सी ३४.

नि-मेषण–

निमेषणो(ण-उ)न्मेष– -षौ महा ६,२५.

नि√मील्

नि-मीलन–

निमीलना(न-आ)दि– -दि श १,४; जाद ४,३४.

नि-मीलित–

निमीलित-दर्शन– -नम् मं २, १,६.

निमीलिता(त-अ)क्ष– -क्षः रुजा १, १; अता २; -क्षस्य सिशि ३८१ : २१.

नि√मृज्,नि···मृजे तै १,४,३; नि-मृज्यात् बृ ६,४,५.

निम्न[m]–

निम्न-ग,गा– -गः बृजा २,८; -गाः योशि ६,११.

निम्न-नाभि– -भिम् वपू २,२.

निम्नो(म्न-उ)न्नत-स्थल– -लम् १आ १८.

निम्ब[cn]–

निम्ब-क– -कम् शि ६,८०.

a) बस. (पावा २,२,२४) । उप. =बिल–? (तु. MW.) । b) 'महतीम्' इति अव्या., 'महति' इति अव्या. संटि. । c) =पाधा. √मस्ज् । d) पावा १, १, ४७ । e) °ग्नप° इति निसा. मुपा. यनि. सु-शोधः (तु. अव्या.) । f) 'निलनः' इति अव्या. । g) व्यु.? । h) तु. टि. चिन्मात्र– । i) =वनविशेष– । j) वैतु. °शी°– इति क्वाचित्कः निसा., आन. (शं.), BW. । k) ऋ १०,१२१,३ । l) मा ३२,२ । m) वैप१ यद्र. । n) व्यु.? =वृक्षविशेष– ।

नि√म्रुच्
नि-म्रुच्- -म्रुक् सूता २,१३§[a].
नि-म्रोचत्- -चन् सूता ३, १०§[b].
नि√म्रेड्, निम्रेडेरन् छां ३,१९,४.
नि√म्लुच्, निम्लोचति छां ३,११,३; निम्लोच छां ३,११,२.
नि-म्लोचत्- -चन् बृ १,१,१.
नि√*यच्छ्, यम्(यमने), >यमि, यामि, नियच्छति ब्र १; सर २, ५; नियच्छन्ति मैत्रि ६, १४; नियच्छेत् क १,३,१३.
नियमयन्ति मु २,२,४६.
नि-यत- -तः भव २,२१; ३,२४; -तम् मुं १,२,१; मना २,७८§[c]; पै ४,१९; महा ४, ७२; वरा २, ४३; सांका ४०; गी १, ४४; ३, ८;१८,९;२३;-तस्य गी १८,७; -ताः नाप ६, ५; दे ३; सांका ३९;गी७,२०;-तान् गौ २,१३.
नियत-कारण- -णात् सांसू १, ५६.
नियतकारण-त्व- -त्वात् सांसू ३,२५.
नियत-धर्म-साहित्य- -त्यम् सांसू ५,२९.
नियत-मानस- -सः गी ६,१५.
नियत-व्रत- -तः चू २०.
नियता(त-आ)कार- -रः १संन्या २,१९.
१नियता(त-आ)त्मन्[d]-
नियतात्म-वत्- -वान् भव ३,१७.
२नियता(त-आ)त्मन्[e]- -त्मनाम् नाप ४, १३; -त्मने सूता ६,६; -त्मभिः गी ८,२; -त्मा नाप ४, १६.
नियता(त-आ)हार- -राः गी ४, ३०.
नि-यति[ii]- -तिः श्वे १,२;नाप९,१; -तिम् नाप ५,१०; महा ४,२०.
नियति-सहित- -ताः भा ९[f].
नि-यन्तृ- -न्ता मै २,९; मैत्रि २, ६; ६,३१[2]; अशि ५,२०; नृउ ९,७; ब्रवि ९८; वट्ठ ३१७:१०.
नि-यम[ii]- -मः अना २४; ते १, १५;१८; १योत २४; नाप ७; त्रिब्रा २, २९; निर्वा २९८: ७; १आ ५; २अव ३३७:४; म १,१; जाद१,४; वरा ५,११; सांसू १,४१;७०; २,७; ३,७६; ५,२२;३९;१०३;१०८; १०९; १११; ६, २२;२४;३८; -मम् गी ७,२०; -मा: मं १,१,४; शां १,१;२; जाद २, २; योशि ६, ४६[g]; वरा ५,१४; शि ७,१०१; योसू २, ३२; -मात् ते १,१८; १कौल ७:२; २कौल ८; ब्रसू ३, ४,७; -मेन पाशु २,८;१२; १४; लिं ३१०:१०; कालि ४०१:१३; १कौल ७:२; २कौल ८; तारा ८४:५; -मेषु १योत २९; नाप ६, २६; -मैः त्रिब्रा२,५३;सार२३१:१४;१८.
नियम-ग्रह- -हः शां १, ७,५.
नियम-वत्- -वन्तः शां ११.
नियम-व्रत-दान- -नानि शि ६, २२९.
नियम-स्थित- -तः अन्न १, ८.
नियमा(म-आख्या>)ख्य- -ख्यैः भव ३,२४.
नियमा(म-अ)तद्रूपा(प-अ)-भाव- -वेभ्यः ब्रसू ३,४,४०.
नियमा(म-अ)तिक्रमो(म-उ)-द्भव- -वाः राउ ५,२५.
नियमा(म-आ)नन्द-विशेष-गण्य- -ण्यम् नाप १.
नियमा(म-अ)नियम- -मम् पप ४१९:१३.
नियमा(म-अ)भाव- -वात् वसू १०.
नि-यमित- -तम् योचू ९८; शां १,७,१.
नि-यम्य मैत्रि ६,१९; योचू ११४; त्रिब्रा २,३८; योशि १,२८; गी ३,७;४१;६,२६;१८,५१.
नि-यामन-
नियामन-समर्थ- -र्थः नाद४५.
?नियमात्तानि[h] शि ७, ४०.
नि√युज्(योगे), >योजि, नियुञ्जीयात्[i] अना १२?[j];१४.
नियुयुजे बा १[k]; नियोक्ष्यति महा ५,११७; गी १८,५९.
नियोजयसि गी ३, १; नियोजयेत् १योत ११२; त्रिब्रा २, ३६; शां १,३,२; जाद ३, ३; योशि ६, ७४; यो ३, १२; वरा ५, ३८.
नि-युक्त- -क्तः इ १३:७; -क्ताः जावा १२; -क्तेन जाद ६,४१.
नि-योक्तव्य- -व्यम् महा ४, २२.
नि-योग- -गम् नार २.
नि-योजित- -तः गी ३,३६.
नि-योज्य शां १,७,४३; यो २,४५.
नियुञ्जीयात् नि√युज्(योगे) द्र.
नियुत[iii]- -तम् २शिसं १३§[m].
निर्-अंश[o]- -शः ते ३,४४; महा ५, ९९;१संन्या२,५६; अन्न५,१३; ९२.

a) तैब्रा ३,७,६,२३। b) तैब्रा ३, ७, ६, २१। c) तैआ १०, ६२, १। d) कस.। e) बस.। f) पूप. °तिः इतिमात्रं तान्त्रि., °त°- इति कृत्वा यनि. स. पूप. अव्या.। g) °मानि इति अव्या.। h) पा.? °मात्ता° इति शोधः द्र.। i) यासुट्सीयुटावुभावपि द्र. (पा ३, ४, १०२; १०३)। j) युञ्जी° इति आन. सुपा. यनि. शोधः द्र.। k) 'नियुजे' इति बे.। l) वैप१ यद्र.। m) मा १७,२।

निरंश-ध्यान-विश्रान्ति-मूक-
-कस्य १संन्या २,५३.
निर्-अक्षर- -रम् त्रिता १,३८ᵃ.
निर्-अग्नि- -ग्निः नाप५,१४;गीह६,१.
निर्-अङ्कुश- -शः ते ५,६५.
निर्-अञ्जन,ना- -नः मुं ३, १,३; हं २१; ना २; तुउ ९, ८; ते ३, ४२; ब्रवि ७८;९७; त्रिब्रा १,२; त्रिवि १, ११;२, १६; १संन्या २,२१; १आ १; २आ ३; त्रिता १,१४;१६; म ४९ : ९; कुपु १; -नम् श्वे ६,१९; ब्रवि ८; नृपू १, ३; ते६,७०; घ्या ४;२८; १योत ९; २योत२,५; योचू ७२; निर्वा २९७ : ३; त्रिवि ७, १७;२९; ५०; शां २-३, १; योशि १, ७; २, १७; ३,१६; अन्न ३, २३; अध्या ६२; त्रिता ५,८; यो ३, ३; म १,१; स ३७९ : १२; सि १,६; पिंब्र १, ४; अवि ८; वपू १, ६; -नाम् त्रिता १, ८४; गु ७३; -नाय हं ११; -ने नाद५०; योशि ५,४३;६,७१; १आ ३०.
निरञ्जन-ज्ञाना(न-अ)र्थ-षट्-चक्र-जाग्र(?गᵇ)ती(?र्तिᵇ)-
निरञ्जनज्ञानार्थषट्चक्रजाग्र-(?गᵇ)ती(?र्तिᵇ)-मय- -यम् म ४८ : २.
निरञ्जन-ता- ताम् अन्न १,१९.
निरञ्जन-वस्तु- -स्तु नाउ ३,२.
निरञ्जना(न-अ)व्यक्ता(क्त-अ)-मृत-निधि- -धौ स्व ६० : १.
नि-रत- नि√रम् द्र.
निर्-अतिशय- -यम् योसू १,२५.
निरतिशय-दिव्य-तेजो-मण्डल- -लम् त्रिवि ७,२.
निरतिशयदिव्यतेजोमण्डल-वृन्दा(न्द-आ)कार-परमा-नन्द-शुद्ध-बोध-स्वरूप- -पम् सि १,१६.
निरतिशयदिव्यतेजोमण्डला-(ल-आ)कार- -राः सि ५,२१.
निरतिशय-दिव्य-तेजो-राशि- -शिः त्रिवि ७,१३.
निरतिशयदिव्यतेजोराश्य-(शि-अ)न्तर-समासीन- -नम् त्रिवि ६,१९.
निरतिशय-निरङ्कुश-सर्वज्ञ-सर्व-शक्ति-सर्वनियन्तृ-
निरतिशयनिरङ्कुशसर्वज्ञसर्व-शक्तिसर्वनियन्तृ-त्व-
निरतिशयनिरङ्कुशसर्वज्ञ-सर्वशक्तिसर्वनियन्तृत्वा(त्व-आ)-द्य(दि-अ)नन्त-कल्याण-गुणा-(ण-आ)कार- -रः त्रिवि२,१५.
निरतिशय-परमानन्द-परम-मूर्ति-विशेष-मण्डल- -लम् त्रिवि ७,२०.
निरतिशय-परमानन्द-पारावार- -रम् त्रिवि ७,२.
निरतिशय-परमानन्द-लक्षण-परं(?रᶜ)-ब्रह्मन्- -ह्मणः त्रिवि ७,२०.
निरतिशय-ब्रह्म-गन्ध-स्वरूप- -पम् त्रिवि ७,५०.
निरतिशय-ब्रह्मा(ह्म-आ)नन्द-परम-मूर्ति-महा-यन्त्र- -न्त्रम् त्रिवि ७,२९.
निरतिशय-विक्रम-विलास- -सम् त्रिवि ७,६.
निरतिशय-सुख- -खम् अता ५.
निरतिशय-सौन्दर्य-पारावार- -रम् त्रिवि ७,५०.
निरतिशय-सौन्दर्य-लावण्या-(ण्य-अ)धिदेवता- -ताम् त्रिवि ६,२३.
निरतिशया(य-आ)कारा(र-अ)-वलम्बिन्- -म्बिना नाप २.
निरतिशया(य-अ)द्वैत-परमानन्द-लक्षण- -णः त्रिवि ८,५; -णम् त्रिवि ७,५०.
निरतिशयाद्वैतपरमानन्द-लक्षण-पर-ब्रह्मन्- -ह्म त्रिवि ८, १८.
निरतिशया(य-अ)नन्त-कान्ति-विशेषा(ष-आ)वर्त- -र्तैः त्रिवि ७, ५०ᵈ.
निरतिशया(य-अ)नन्त-दिव्या-(व्य-आ)नन्द-तेजो-ज्वाला-राशि-मण्डल- -लम् सि३,५.
निरतिशया(य-अ)नन्त-परमा-नन्द-पारावार-जाल- -लम् सि १,१७.
१निरतिशया(य-आ)नन्दᵉ-
निरतिशयानन्दा(न्द-आ)विर्भा-व- -वः त्रिवि ८,४.
२निरतिशया(य-आ)नन्दᶠ- -न्दः त्रिवि १, १; -न्दः(?न्दाःᶜ) त्रिवि ७, २०; -न्दम् त्रिवि ६, २१; २३; -न्दैः त्रिवि ६,२२.
निरतिशयानन्द-चामर-वि-शेष- -षैः त्रिवि ७,५०.
निरतिशयानन्द-तेजो-मण्ड-ल- -लम् त्रिवि ७,२०.
निरतिशयानन्द-तेजो-राशि- -शिः त्रिवि ७,२५.
निरतिशयानन्दतेजोराशि-विशेष- -षम् त्रिवि ४,१.
निरतिशयानन्दतेजोराश्य-(शि-अ)भ्यन्तर-समासीन- -नम् त्रिवि ७,५०.
निरतिशयानन्द-दिव्य-तेजो-राशि- -शिः त्रिवि ५,१४; ६, १९; ७,७; सि १,१०.

a) अनक्षᵒ इति अध्या. । b) पा.? यनि. शोधः द्र. । c) पा.? यनि. शोधः द्र. (तु. निसा.)। d) ᵒन्दं कान्तिᵒ इति निसा. । e) कस. । f) बस. ।

निरतिशयानन्ददिव्यतेजो-राशि-मण्डल- -लम् सि ५,१.
निरतिशयानन्द-परम-मङ्गल-विशेष-समष्ट्या(ष्टि--आ)-कार- -रम् त्रिवि ७,२०.
निरतिशयानन्द-पारावार- -रः त्रिवि ६,१०.
निरतिशयानन्दपारावारा-(र-आ)कार- -रम् त्रिवि७,१९.
निरतिशयानन्द-ब्रह्म-गन्ध-विशेषा(ष--आ)कार- -रम् त्रिवि ७,५०.
निरतिशयानन्द-मय-
निरतिशयानन्दमया(य-अ)-नन्त-परम-विभूति-समष्टि--ष्ट्या त्रिवि २,१५.
निरतिशयानन्द-लक्षण- -णम् त्रिवि ७,२२; मं ४,१,३.
निरतिशयानन्दलक्षण-महा-विष्णु-स्वरूप- -पम् त्रिवि ६,२०.
निरतिशयानन्द-सहस्र-प्रा-कार- -रैः त्रिवि ७,१९.
निरतिशयानन्द-सागर- -रः त्रिवि ७,१.
निरतिशयानन्दा(न्द-अ)खण्ड-ब्रह्मा(ह्म-आ)नन्द-निज-मूर्त्या-(र्ति--आ)कार- -रेण त्रिवि १,११.
निरतिशयानन्दा(न्द-अ-)द्वि-तीय- -यः त्रिवि ८,१५.
निरतिशयानन्दा(न्द-अ)नन्त-तडित्-पर्वता(त--आ)कार--रम् त्रिवि ७,१७.
निरतिशयानन्दा(न्द-अ)मृत-सागर- -रेषु त्रिवि ६,२३.
निरतिशयानन्दा(द-अ)मृत-सार-सागरा(र-अ)नन्त-मकर-न्दा(न्द--आ)कार- -रम् सि ६,२०.
निर्-अध्यवसाय- -यः मैत्रि ६,३०.
निर्-अन्तर- -रः कुं २६; -रम् अता ५[a]; योशि ६,३५; पाशु २,१०; १अव २६; त्रिता ४,३५;सर ३, ३१; सार २१९ : २;३; २२० : १९; २२६ : १०; २२७ : ८; २३० : ६; २३४ : ७; २१; २४३ : २२; २४४ : १;२५५ : ५; १६; २५८ : ३; २५९ : ६; २०[२]; २७२ : १६;१७; २७५ : १२; २८० : १३; २८२ : १२; २३; २८५ : १;४;१२; २८६ : ५;६;२९२ : १९; पिंब्र ५,६.
नैरन्तर्य- -र्यम् ससा १, ११; ३२; -र्येण मु १,२,६.
निरन्तर-क्रीडा-प(र>)रा- -रा सार २८८ : ७.
निरन्तर-क्रीडा-स्थल- -लम् सार २२६ : २२.
निरन्तर-निरुपम-निरतिशयो-(य-उ)त्कट-ज्ञाना(न-आ)नन्दा-(न्द--अ)नन्त-गुच्छ-फल--लैः त्रिवि ७,५०.
निरन्तर-रास-क्रीडा(डा--आ)-सक्त- -क्ताय सार २६१ : १.
निरन्तर-समाधि-परंपरा- -राभिः त्रिवि ५,११.
निरन्तर-सेवा- -वायाम् सार २८९,५.
निरन्तरा(र-अ)तितुरीय-निरति-शय-सौन्दर्या(र्य--आ)नन्द-पारावार- -रम् त्रिवि ७,५०[b].
निरन्तरा(र-अ)नुसंधान- -नात् स ३७८ : ५.
निरन्तरा(र-अ)भि-नव- -वम् त्रिवि ७,१७.
निर्-अन्तराय- -यम् हे १३.
निर्-अपे(क्षा>)क्ष- -क्षः नृउ ९, १०; क्षु २१; ब्रवि ९८; नाप ३, ४४; ७६.
नैरपेक्ष्य- -क्ष्ये सांसू ३,६८.
निर्-अपेक्षक- -कम् १आ ७.
निर्-अभिमान- -नः २आ ३.
नि√रम्
नि-रत- -ते के छां आरु मै मैत्रे योचू वा महा १संन्या अव्य कुं सावि रुजा जाद जाबा शां[२].
निरय[c]- -यः मै ३, ४; मैत्रे १, ३; स्व ६१ : ११; २कौल ८; -यम् पब्र३,९; भव २,५९; -ये(?यः[d]) मत्रि ३,४; भव १,३.
निर्-अर्थक- -कः नाप ४,३३; -कम् जाद ४, ५३; शि ४, ४८; भव १,४५; -काः योशि ६,१८.
निर्-अवद्य,द्या- -द्यः नृउ ९, ११; सुबा १३; ब्रवि९७; -द्यम् श्वे६, १९; त्रिवि७,१७;५०; सि६,१; -द्याम् गु ७३; -द्ये १आ ३०.
निर्-अवधि[e]-
निरवधि-कार-
निरवधिकार-ता- -तया सुबा १३.
निरवधि-नाराच-विकि(?निक[f])र-पात- -तः महा ४,२६.
निरवधि-निःसीम-तत्त्व-
निरवधिनिःसीमतत्त्व-मात्र--त्रः आबो७[g].
निरवधि-निज-बोध- -धःआबो७.
निर्-अवयव- -वः आबो ६; -वम् त्रिवि २, १; ८; ७, १७; सि १, ५.
निरवयव-त्व- -त्वात् त्रिवि २,८.
निरवयवत्व-शब्द-कोप- -पः ब्रसू २,१,२६.

a) वा.किवि.द्र.। b) तु.सस्थ.टि.अद्वैतपरमानन्द-> -न्दम्। c) व्यु.?=१नरक- [वैतु.अभा.=निर्+अय-(=उत्सव-)> बस.]। d) पा.? यनि.शोधः द्र.(तु.मै३,४)। e) प्रास.। f) पा.? यनि.शोधः द्र.(तु.अव्या.संटि.)। g) °मसत्त्व° इति अव्या.।

